ಪಾದವ್ಯಪದೇಶವು ಕೂಡುತ್ತದೆ ಎಂಬುದನ್ನು ತಿಳಿಸಲು ಶ್ರುತ್ಯುಕ್ತಪ್ರಕಾರೇಣ ಎಂಬರ್ಥವನ್ನು ಹೇಳುತ್ತಿದೆ. ಇದರಿಂದ ಪರಾಭಿಪ್ರೇತವಾದ ಭೂತ, ಪೃಥಿವೀ ಮೊದಲಾದವುಗಳೇ ಪಾದವಾಗಿವೆ ಎಂಬ ವಿಚಾರವನ್ನು ನಿರಾಕರಿಸದಂತಾಗುತ್ತದೆ.

'ವ್ಯಪದೇಶಾಚ್ಚ' ಎಂಬಲ್ಲಿರುವ ಚಕಾರವು ಗಾನತ್ರಾಣಕರ್ತೃತ್ವವಷ್ಟೇ ಕೇಳಿಸುತ್ತಿಲ್ಲ ಎಂಬರ್ಥವನ್ನು ಸೂಚಿಸುತ್ತಿದೆ. ಸೂತ್ರದಲ್ಲಿರುವ ಉಪಪತ್ತೇಃ ಎಂಬ ಪದವು ಭೂತಾದಿಪಾದತ್ವ ಎಂಬ ಲಿಂಗಕ್ಕೆ ನಿರವಕಾಶತ್ವವನ್ನು ಉಪಪಾದಿಸುತ್ತಿದೆ ಎಂಬುದಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಾ ವ್ಯಪದೇಶಾಚ್ಚ ಎಂಬುದನ್ನು ಪ್ರತ್ಯೇಕವಾಗಿ ಪರಿಗಣಿಸಿ ವ್ಯಾಖ್ಯಾನಮಾಡಬೇಕು. "ಉಪಪತ್ತೇಃ" ಎಂಬುದರಿಂದ ತಿಳಿಯುವ ಪ್ರಯೋಜನವನ್ನು "ಅನ್ಯತ್ರಾನುಪಪತ್ತೇಶ್ಚ" ಎಂಬ ಟೀಕಾಮಾತಿನಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ.

**वाक्यार्थमञ्जरी – ॐ छन्दोऽभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथाहि दर्शनम् ॐ** ॥ 'गायत्री वा' इत्युक्तगायत्री छन्दोविशेष एव स्यात् । गायत्रीपदेन छन्दसोऽभिधानात् तस्मान्न तद् ब्रह्मेति चेन्न । किन्तु ब्रह्मैव गायत्री । कुतः? हि यस्मात् तथा दर्शनं गानत्राणकर्तृत्वलिङ्गबोधका 'गायति त्रायति च' इति श्रुतिरस्ति तस्मादित्यर्थः । विष्ण्वादिप्रसिद्धपदानि विहायाप्रसिद्धगायत्रपदेन तन्निर्देशे किं निमित्तमित्यत उक्तम् – **तथेति** ॥ तथा गानादिकर्तृत्वगुणविशिष्टतया चेतसि अन्तःकरणे अर्पणार्थं ध्यानार्थम् उपासनार्थमिति यावत् । निगदात् 'गायत्री वा इदं सर्वम्' इति कथनादित्यर्थः ॥ **अथेति** ॥ अथ द्वारपोपास्तिकथनानन्तरं पुनर्भगवन्माहात्म्यमुच्यते । यच्छ्वेतद्वीपानन्तासनवैकुण्ठगतमूर्तित्रयम्, तत् । अतः बुद्धिस्थतया विवक्षिताया दिवः परः । ज्योतिः तेजोमयं विश्वतः मेरुवैजयन्तसत्यलोकाख्यब्रह्मसदनेभ्यः पृष्ठेषु क्रमेणोच्चेषु सर्वतः भूर्भुवःस्वरात्मकसर्वलोकेभ्यः पृष्ठेषु अनुत्तमेषु न विद्यत उत्तमो लोको येभ्यस्तेषु स्वयमेवोत्तमेषु अनन्तासनश्वेतद्वीपवैकुण्ठेषु दीप्यते प्रकाशते तत्सर्वलोकेषु दीप्यमानं तेजः इदं वाव इदं खलु इदं किं यदिदमस्मिन्नन्तः पुरुषे पुरुषहृदये ज्योतिरस्ति, तदित्यर्थः ॥ **गायत्री वेति** ॥ अत्र भगवतः षड्विधरूपेषु गायत्रीनामकं स्त्रीरूपं हयशीर्षकं प्रथमरूपापेक्षया द्वितीयं रूपमुच्यते । यदिदं किञ्च भूवहौ बहुपूर्णतायामित्युक्तेः भूतं पूर्णं मत्स्यादि सर्वं सर्वान्तःस्थितं च तदिदं सर्वं गायत्रीनामा भगवानेव । एवञ्च भूतशब्दाभिधेयं मत्स्यादिसर्वान्तःस्थितं द्वितीयं रूपमित्युक्तं भवति । अस्यैव तृतीयं रूपमाह – **वागिति** ॥ गायत्रीनामा भगवान् वाग्वै वाक्संस्थो वचनाद् वाङ्नामा स्त्रीरूपो हयशीर्षाख्य एव । नतु तद्भिन्न इत्यर्थः । वाङ्नामकस्य भगवद्रूपत्वं कुत इत्यतस्तल्लक्षणयोगादित्यत आह – **वाग्वेति** ॥ इदं सर्वं प्राणिजातं वाग्वै

वाङ्नामकभगवदधीनमेव । वाचा हि प्रवर्तने निवर्तते च लोकः । सर्वलोकप्रवर्तकत्वं च भगवल्लक्षणं च प्रसिद्धमेवेति ॥ **छन्दोविशेष एवेति** ॥ गायत्रीछन्दोपेतमन्त्रविशेष इत्यर्थः ॥ **वाग्विधानाच्चेति** ॥ न शब्दात्मकस्य तत्सम्भवतीति भावः । तेजः कान्तिः । ब्रह्मवर्चसम् अध्ययनलब्धकान्तिविशेषः । तदुभयसाधनं गायत्रीत्यर्थः ॥ **योगस्येति** ॥ गायति वेदान् त्रायति चाध्यापकान् पापेभ्य इति निर्वचनादिति भावः । **नित्यस्येति**॥ अनादिनित्यस्येत्यर्थः । अन्यथोत्पत्तावीश्वराधीनत्वपरिहारात् । अत एव न्यायविवरणटीकायां वेदस्य नित्यत्वेनानादित्वादित्युक्तम् । वेदस्य नित्यत्वा-दनादित्वाच्चेति सुधाग्रन्थाच्च । यद्यपि कृतकक्रमविशिष्टस्य वर्णात्मकस्य वेदस्य नानादित्वम् । तथापीश्वरबुद्धिघटितस्य तथात्वेन वा कृत्वा चिन्तया वा तदुक्तिरित्य-दोषः । स्वपदानि स्वोक्तपदानि । 'सूत्रार्थो वर्ण्यते यत्र पदैः सूत्रानुकत्रारिभिः । स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥' इत्युक्तेरिति भावः ॥ **गायत्र्यादीति** ॥ गायत्र्यादिशब्दार्थो गानत्राणकर्तृत्वादिः स एव गुणस्तत्स्वरूपत्वेनेत्यर्थः । आदिपदेन **वाचो ग्रहणमिति** ॥ 'वाग् वै गायत्री' इति श्रुतौ वाकक्शब्दार्थं गुणवत्तया उपासनार्थं विष्णुर्वागित्युक्तम् । तथाच वात्त्वविधानं न विष्णुत्वपक्षे बाधकमिति भावः ॥ **एतन्न्यायस्येति** ॥ तत्तच्छब्दसमन्वयकथनं तदर्थगुणस्वरूपत्वेनोपासनार्थमिति न्यायस्येत्यर्थः ॥ **या वै सेति** ॥ चतुर्थरूपमनेनोच्यते । या वै गायत्री तत्संस्थं तन्नामा भगवान् सा इयं वाव इयं खलु । इयं केत्यपेक्षायामाह – **योऽयमिति** ॥ पृथुत्वात् पृथिवीनामा पृथिवीसंस्थो भगवानित्यर्थः । तथाचात्र 'या वै सा' इत्यादिना गायत्र्याः पृथिव्यभेदमुक्त्वा 'अस्यां हीदं सर्वं प्रतिष्ठितम्' इति पृथिव्याः सर्वाधारत्वमुक्तम् । तच्च विष्णोरेव गायत्रीपृथिव्यादिशब्दार्थत्वं वक्तुं नान्यथेति भावः ॥ **श्रुत्युक्तेति** ॥ गायतीति श्रुत्युक्तेत्यर्थः । कर्माणि पुण्यपापानि । क्रिया चेष्टा । स्मृतिविशेषोदाहरणप्रयोजनमाह – अत्रेति ॥

## ಪಾದಶಬ್ದಕ್ಕೆ ಭಿನ್ನಾಂಶ ಎಂದರ್ಥ

**भाष्यम् – 'सुवर्णं कोशं रजसा परीवृतम् । देवानां वसुधानीं विराजम् । अमृतस्य पूर्णां तामु कलां विचक्षते । पाद९ षड्ढोतुर्न किला विवित्से' (तै.आ.३-११) इति श्रुतेः । पाद इति एकदेशपरिमितं चतुर्भागबल इतिवद् भिन्नं च ।**

ಬಂಗಾರಮಯವಾದ ಬ್ರಹ್ಮಾಂಡವು ಸತ್ತ್ವಾದಿ ತ್ರಿಗುಣಗಳಿಂದ ಆವರಿಸಲ್ಪಟ್ಟಿದೆ. ದೇವತೆಗಳ ಐಶ್ವರ್ಯಕ್ಕೆ ಆಶ್ರಯಸ್ಥಾನವಾಗಿದೆ; ಅತ್ಯಂತಪ್ರಕಾಶಮಾನವಾಗಿದೆ. ಮುಕ್ತರ ಸಮೂಹ-ದಿಂದ ಪರಿಪೂರ್ಣವಾಗಿದೆ. ಇಂತಹ ಬ್ರಹ್ಮಾಂಡವು ಷಡಿಂದ್ರಿಯಪ್ರೇರಕನಾದ ಪರಮಾತ್ಮನ ಒಂದಂಶಕ್ಕೂ ಸಮಾನವಲ್ಲ.' ಎಂದು ತೈತ್ತಿರೀಯೋಪನಿಷತ್ತು ಹೇಳುತ್ತಿದೆ.

ಇಲ್ಲಿ ಪಾದಶಬ್ದಕ್ಕೆ ಒಂದು ಭಾಗ ಎಂದರ್ಥವಲ್ಲ; 'ರಾಮನ ನಾಲ್ಕನೆಯ ಒಂದಂಶದ ಬಲ ಭೀಮನಿಗಿದೆ' ಎಂಬ ವ್ಯವಹಾರದಂತೆ ಭಿನ್ನವಾದ ಅಂಶವೆಂದರ್ಥ.

---

**भाष्यदीपिका** – ननु गायत्र्यामिव विष्णावपि भूतादिपादत्वोक्तिरनुपपन्ना । तस्य भूतभिन्नत्वादित्यत आह – सुवर्णमित्यादि ॥ 'सुवर्णम्' इत्यारभ्य 'भिन्नं च' इत्यन्तमेकवाक्यतयाऽर्थक्रमेण व्याख्येयम् । यज्ञदत्तस्य, देवदत्तः, इत्युच्यते, विश्वमिति च शेषः । पाद इति चाऽवर्तते । चशब्द एवार्थे हेतौ च । एकदेशपरिमितमिति हेतुगर्भमावर्तनीयम् । तथा च 'चो' यतः श्रुतिस्थेन पाद इति शब्देन न भूताना-मित्यमृतपादत्रयवत्स्वरूपांशत्वमुच्यते । येनानुपपत्तिः स्यात् । किन्तु, यज्ञदत्तस्य चतुर्भागबलो देवदत्त इतिवद् भिन्नमेव विश्वम् । यतः 'परिमितम्' विष्णुपाद-परिमितसामर्थ्यम् अतः पाद इति विष्णुपादत्वेनोच्यत इत्यर्थः । अस्यातो विष्णौ भूतादिपादव्यपदेशोपपत्तेश्चैवमिति पूर्वेणान्वयः । तर्हि विश्वचतुष्टयसमो हरिरित्यागत-मित्यतोऽप्याह – पाद इतीति ॥ तथा च यतः श्रौतपाद इति पदेन चतुर्भागबल इतिवन्न विश्वं विष्णुसामर्थ्यस्य चतुर्थांशपरिमितमित्युच्यते । किन्तु, 'एकदेशपरिमितं' विष्णुसामर्थ्यैकदेशपरिमितमित्यतो नोक्तदोष इत्यर्थः । कुत एतद् ज्ञायत इत्यत आह – सुवर्णं कोशमिति ॥ 'श्रुतेः' तैत्तिरीयश्रुतेः । श्रुतौ तृतीयार्थे षष्ठी, समुदायैकवचनं चैतत् । अत एव 'मुक्तैः पूर्णाम्' इत्युक्तं टीकायाम् । एवं च तत्त्व-प्रदीपटीकयोरेकवाक्यता ॥

पादमित्यावर्तते । तत्रैकं भावसाधनम् । न किलेति दीर्घः सांहितिकः । तथा चैकस्मिन् कपाले 'सुवर्णं' तन्मयं 'रजसा परीवृतं' रजोगुणोपलक्षिताबग्नीरनभोऽहङ्कारमहत्तत्त्व-गुणत्रयैः परिवृतं 'विराजं' ब्रह्मणः शरीरं, तत्त्वप्रदीपरीत्या विशेषेण राजन्तमिव 'कोशं' लिङ्गव्यत्ययः, ब्रह्माण्डाख्यं यदस्ति । देवानां 'वसुधानीं' द्रव्यनिधानमञ्जूषाम् 'अमृतैः' मुक्तैः पूर्णां तां 'षड्ढोतुः' षडिन्द्रियेषु विषयान् जुह्वतः, षडिन्द्रियाणि विषयेषु जीवेन जुह्वतो वा, षडिन्द्रियैः सारादनकर्तुर्वा, विष्णोः 'कलामु' एकदेशपरिमितामेव 'पादं विचक्षते' पादशब्देनाऽचक्षते वदन्ति पुरुषसूक्ताद्यागमा इति शेषः । न किल अत्र पादशब्देनाङ्घ्रिं वदन्ति, नापि चतुर्थांशमित्येवार्थः । कुतः? यतः सा मञ्जूषा 'पादं' पादत्वं चतुर्थभागसाम्यं 'न विवित्से' न लेभे किलेति श्रुत्यर्थः ॥

ಪ್ರತಿಪದಾರ್ಥ -- ಭೂತಾದಿಪಾದತ್ವದ ವಚನವು ಗಾಯತ್ರಿಯಲ್ಲಿ ಹೇಗೆ ಅನುಪಪನ್ನವೋ ಅದರಂತೆ ವಿಷ್ಣುವಿನಲ್ಲಿಯೂ ಅನುಪಪನ್ನವಾಗಿದೆ. ಏಕೆಂದರೆ ವಿಷ್ಣುವು ಭೂತಪದಾರ್ಥಗಳಿಗಿಂತ ಭಿನ್ನನಾಗಿದ್ದರಿಂದ. ಈ ಶಂಕೆಗೆ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ.

ಸುವರ್ಣಂ = ಬಂಗಾರಮಯವಾದ, ಕೋಶಂ = ಬ್ರಹ್ಮಾಂಡವು, ರಜಸಾ = ಸತ್ವಾದಿತ್ರಿಗುಣಗಳಿಂದ, ಪರೀವೃತಂ = ಸುತ್ತುವರೆಯಲ್ಪಟ್ಟಿದೆ. ದೇವಾನಾಂ = ದೇವತೆಗಳ, ವಸುಧಾನೀಂ = ಐಶ್ವರ್ಯಕ್ಕೆ ಆಶ್ರಯಸ್ಥಾನವಾಗಿದೆ, ವಿರಾಜಂ = ಪ್ರಕಾಶಮಯವಾಗಿದೆ. ಅಮೃತಸ್ಯ ಪೂರ್ಣಾಂ = ಮುಕ್ತರ ಸಮೂಹದಿಂದ ಪರಿಪೂರ್ಣವಾಗಿದೆ. ಇಂತಹ ಬ್ರಹ್ಮಾಂಡವು ಪಾದಂ = ಪರಮಾತ್ಮನ ಒಂದಂಶವಾಗಿದೆ. ಷಡ್ಢೋತುಃ = ಷಡಿಂದ್ರಿಯಗಳಿಗೆ ಫಲದಾತೃವಾದ ಪರಮಾತ್ಮನ, ತಾಮು ಕಲಾಂ = ಏಕದೇಶವಾದ ಭಿನ್ನಾಂಶವಾಗಿ, ವಿಚಕ್ಷತೇ = ಶ್ರುತಿಯು ಹೇಳುತ್ತಿದೆ. ನ ಕಿಲಾ ವಿವಿತ್ಸೇ = ಸಮಗ್ರ ಬ್ರಹ್ಮಾಂಡವು ಪರಮಾತ್ಮನ ಲವಲೇಶದ ಅಂಶಕ್ಕೂ ಸರಿಸಾಟಿಯಲ್ಲ. ಇತಿ = ಹೀಗೆ, ಶ್ರುತೇಃ = ತೈತ್ತಿರೀಯಶ್ರುತಿ ಹೇಳುತ್ತಿದೆ.

ಪಾದ ಇತಿ = ಶ್ರುತಿಯಲ್ಲಿ ಪಾದ ಎಂದರೆ, ಏಕದೇಶಪರಿಮಿತಂ = ಏಕ-ದೇಶಪರಿಮಾಣವುಳ್ಳದ್ದು ಎಂದರ್ಥ. ಚತುರ್ಭಾಗಬಲಃ ಇತಿವತ್ = 'ದೇವದತ್ತನಿಗಿಂತ ಯಜ್ಞದತ್ತನು ನಾಲ್ಕನೆಯ ಒಂದುಭಾಗ ಬಲವುಳ್ಳವನು' ಎಂಬ ವ್ಯವಹಾರದಂತೆ, ಭಿನ್ನಶ್ಚ = ಭಿನ್ನಾಂಶವುಳ್ಳವನು ಎಂದರ್ಥ ಹೊರತು ಸ್ವರೂಪಾಂಶವುಳ್ಳವನು ಎಂದರ್ಥವಲ್ಲ.

**तत्वप्रकाशिका – ननु भूतादिपादव्यपदेशो गायत्र्यामिव विष्णावपि नोपपद्यते तस्यापि भूतभिन्नत्वादित्यत आह – सुवर्णमित्यादि ॥**

ಶಂಕೆ -- ಭೂತಾದಿಪಾದವ್ಯಪದೇಶವು ಗಾಯತ್ರಿಯಲ್ಲಿ ಹೇಗೆ ಕೂಡುವುದಿಲ್ಲವೋ ಅದರಂತೆ ವಿಷ್ಣುವಿನಲ್ಲಿಯೂ ಸಹ ಕೂಡುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ವಿಷ್ಣುವು ಭೂತಭಿನ್ನನಾದ್ದರಿಂದ. ಹೀಗಿರುವಾಗ ಸರ್ವಭೂತಗಳು ವಿಷ್ಣುವಿನ ಒಂದಂಶವೆಂದು ಹೇಗೆ ಹೇಳುತ್ತೀರಿ? ಈ ಶಂಕೆಗೆ ಉತ್ತರರೂಪವಾಗಿ ''ಸುವರ್ಣಂ'' ಇತ್ಯಾದಿಭಾಷ್ಯವು ಹೊರಟಿದೆ.

**नायं पादशब्दोऽमृतपादत्रयवद्भूतानामपि स्वरूपांशत्वाभिप्रायः किन्तु यज्ञदत्तस्य चतुर्भागबलो देवदत्त इतिवद्भिन्नमेव विश्वं तत्पादपरिमितसामर्थ्यं पादतयोच्यते । अतो भूतपादत्वं विष्णोरुपपद्यते ।**

---

सत्तर्कदीपावल्याम् – पादं न विवित्से इति पादसाम्यं न लेभे इत्युक्तम् । अत्र पक्षद्वयेऽपि पुरुषव्यत्ययस्तुल्यः । टीकाकृत्पक्षे लकारव्यत्ययश्च । यद्वा – लिङ्गव्यत्ययस्य छान्दसत्वं कोशमित्यस्य द्वितीयान्तत्वं चोपेत्य स्त्रीलिङ्गपदानामपि कोशविशेषणत्वेनैक एवान्वयः ॥

ಬಂಗಾರಮಯವಾದ ಬ್ರಹ್ಮಾಂಡವು ಸತ್ತ್ವಾದಿ ತ್ರಿಗುಣಗಳಿಂದ ಆವರಿಸಲ್ಪಟ್ಟಿದೆ. ದೇವತೆಗಳ ಐಶ್ವರ್ಯಕ್ಕೆ ಆಶ್ರಯಸ್ಥಾನವಾಗಿದೆ; ಅತ್ಯಂತಪ್ರಕಾಶಮಾನವಾಗಿದೆ. ಮುಕ್ತರ ಸಮೂಹ-ದಿಂದ ಪರಿಪೂರ್ಣವಾಗಿದೆ. ಇಂತಹ ಬ್ರಹ್ಮಾಂಡವು ಷಡಿಂದ್ರಿಯಪ್ರೇರಕನಾದ ಪರಮಾತ್ಮನ ಒಂದಂಶಕ್ಕೂ ಸಮಾನವಲ್ಲ.' ಎಂದು ತೈತ್ತಿರೀಯೋಪನಿಷತ್ತು ಹೇಳುತ್ತಿದೆ.

ಇಲ್ಲಿ ಪಾದಶಬ್ದಕ್ಕೆ ಒಂದು ಭಾಗ ಎಂದರ್ಥವಲ್ಲ; 'ರಾಮನ ನಾಲ್ಕನೆಯ ಒಂದಂಶದ ಬಲ ಭೀಮನಿಗಿದೆ' ಎಂಬ ವ್ಯವಹಾರದಂತೆ ಭಿನ್ನವಾದ ಅಂಶವೆಂದರ್ಥ.

---

**भाष्यदीपिका** – ननु गायत्र्यामिव विष्णावपि भूतादिपादत्वोक्तिरनुपपन्ना । तस्य भूतभिन्नत्वादित्यत आह – सुवर्णमित्यादि ॥ 'सुवर्णम्' इत्यारभ्य 'भिन्नं च' इत्यन्तमेकवाक्यतयाऽर्थक्रमेण व्याख्येयम् । यज्ञदत्तस्य, देवदत्तः, इत्युच्यते, विश्वमिति च शेषः । पाद इति चाऽवर्तते । चशब्द एवार्थे हेतौ च । एकदेशपरिमितमिति हेतुगर्भमावर्तनीयम् । तथा च 'चो' यतः श्रुतिस्थेन पाद इति शब्देन न भूताना-मित्यमृतपादत्रयवत्स्वरूपांशत्वमुच्यते । येनानुपपत्तिः स्यात् । किन्तु, यज्ञदत्तस्य चतुर्भागबलो देवदत्त इतिवद् भिन्नमेव विश्वम् । यतः 'परिमितम्' विष्णुपाद-परिमितसामर्थ्यम् अतः पाद इति विष्णुपादत्वेनोच्यत इत्यर्थः । अस्यातो विष्णौ भूतादिपादव्यपदेशोपपत्तेश्चैवमिति पूर्वेणान्वयः । तर्हि विश्वचतुष्टयसमो हरिरित्यागत-मित्यतोऽप्याह – पाद इतीति ॥ तथा च यतः श्रौतपाद इति पदेन चतुर्भागबल इतिवन्न विश्वं विष्णुसामर्थ्यस्य चतुर्थांशपरिमितमित्युच्यते । किन्तु, 'एकदेशपरिमितं' विष्णुसामर्थ्यैकदेशपरिमितमित्यतो नोक्तदोष इत्यर्थः । कुत एतद् ज्ञायत इत्यत आह – सुवर्णं कोशमिति ॥ 'श्रुतेः' तैत्तिरीयश्रुतेः । श्रुतौ तृतीयार्थे षष्ठी, समुदायैकवचनं चैतत् । अत एव 'मुक्तैः पूर्णाम्' इत्युक्तं टीकायाम् । एवं च तत्त्व-प्रदीपटीकयोरेकवाक्यता ॥

पादमित्यावर्तते । तत्रैकं भावसाधनम् । न किलेति दीर्घः सांहितिकः । तथा चैकस्मिन् कपाले 'सुवर्णं' तन्मयं 'रजसा परीवृतं' रजोगुणोपलक्षिताबग्नीरनभोऽहङ्कन्महत्तत्त्व-गुणत्रयैः परिवृतं 'विराजं' ब्रह्मणः शरीरं, तत्त्वप्रदीपरीत्या विशेषेण राजन्तमिव 'कोशं' लिङ्गव्यत्ययः, ब्रह्माण्डाख्यं यदस्ति । देवानां 'वसुधानीं' द्रव्यनिधानमञ्जूषाम् 'अमृतैः' मुक्तैः पूर्णां तां 'षड्ढोतुः' षडिन्द्रियेषु विषयान् जुह्वतः, षडिन्द्रियाणि विषयेषु जीवेन जुह्वतो वा, षडिन्द्रियैः सारादनकर्तुर्वा, विष्णोः 'कलामु' एकदेशपरिमितामेव 'पादं विचक्षते' पादशब्देनाऽचक्षते वदन्ति पुरुषसूक्ताद्यागमा इति शेषः । न किल अत्र पादशब्देनाङ्घ्रिं वदन्ति, नापि चतुर्थांशमित्येवार्थः । कुतः? यतः सा मञ्जूषा 'पादं' पादत्वं चतुर्थभागसाम्यं 'न विवित्से' न लेभे किलेति श्रुत्यर्थः ॥

ಪ್ರತಿಪದಾರ್ಥ -- ಭೂತಾದಿಪಾದತ್ವದ ವಚನವು ಗಾಯತ್ರಿಯಲ್ಲಿ ಹೇಗೆ ಅನುಪಪನ್ನವೋ ಅದರಂತೆ ವಿಷ್ಣುವಿನಲ್ಲಿಯೂ ಅನುಪಪನ್ನವಾಗಿದೆ. ಏಕೆಂದರೆ ವಿಷ್ಣುವು ಭೂತಪದಾರ್ಥಗಳಿಗಿಂತ ಭಿನ್ನನಾಗಿದ್ದರಿಂದ. ಈ ಶಂಕೆಗೆ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ.

ಸುವರ್ಣಂ = ಬಂಗಾರಮಯವಾದ, ಕೋಶಂ = ಬ್ರಹ್ಮಾಂಡವು, ರಜಸಾ = ಸತ್ವಾದಿತ್ರಿಗುಣಗಳಿಂದ, ಪರೀವೃತಂ = ಸುತ್ತುವರೆಯಲ್ಪಟ್ಟಿದೆ. ದೇವಾನಾಂ = ದೇವತೆಗಳ, ವಸುಧಾನೀಂ = ಐಶ್ವರ್ಯಕ್ಕೆ ಆಶ್ರಯಸ್ಥಾನವಾಗಿದೆ, ವಿರಾಜಂ = ಪ್ರಕಾಶಮಯವಾಗಿದೆ. ಅಮೃತಸ್ಯ ಪೂರ್ಣಾಂ = ಮುಕ್ತರ ಸಮೂಹದಿಂದ ಪರಿಪೂರ್ಣವಾಗಿದೆ. ಇಂತಹ ಬ್ರಹ್ಮಾಂಡವು ಪಾದಂ = ಪರಮಾತ್ಮನ ಒಂದಂಶವಾಗಿದೆ. ಷಡ್ಢೋತುಃ = ಷಡಿಂದ್ರಿಯಗಳಿಗೆ ಫಲದಾತೃವಾದ ಪರಮಾತ್ಮನ, ತಾಮು ಕಲಾಂ = ಏಕದೇಶವಾದ ಭಿನ್ನಾಂಶವಾಗಿ, ವಿಚಕ್ಷತೇ = ಶ್ರುತಿಯು ಹೇಳುತ್ತಿದೆ. ನ ಕಿಲಾ ವಿವಿತ್ಸೇ = ಸಮಗ್ರ ಬ್ರಹ್ಮಾಂಡವು ಪರಮಾತ್ಮನ ಲವಲೇಶದ ಅಂಶಕ್ಕೂ ಸರಿಸಾಟಿಯಲ್ಲ. ಇತಿ = ಹೀಗೆ, ಶ್ರುತೇಃ = ತೈತ್ತಿರೀಯಶ್ರುತಿ ಹೇಳುತ್ತಿದೆ.

ಪಾದ ಇತಿ = ಶ್ರುತಿಯಲ್ಲಿ ಪಾದ ಎಂದರೆ, ಏಕದೇಶಪರಿಮಿತಂ = ಏಕ-ದೇಶಪರಿಮಾಣವುಳ್ಳದ್ದು ಎಂದರ್ಥ. ಚತುರ್ಭಾಗಬಲಃ ಇತಿವತ್ = 'ದೇವದತ್ತನಿಗಿಂತ ಯಜ್ಞದತ್ತನು ನಾಲ್ಕನೆಯ ಒಂದುಭಾಗ ಬಲವುಳ್ಳವನು' ಎಂಬ ವ್ಯವಹಾರದಂತೆ, ಭಿನ್ನಶ್ಚ = ಭಿನ್ನಾಂಶವುಳ್ಳವನು ಎಂದರ್ಥ ಹೊರತು ಸ್ವರೂಪಾಂಶವುಳ್ಳವನು ಎಂದರ್ಥವಲ್ಲ.

**तत्वप्रकाशिका – ननु भूतादिपादव्यपदेशो गायत्र्यामिव विष्णावपि नोपपद्यते तस्यापि भूतभिन्नत्वादित्यत आह – सुवर्णमित्यादि ॥**

ಶಂಕೆ -- ಭೂತಾದಿಪಾದವ್ಯಪದೇಶವು ಗಾಯತ್ರಿಯಲ್ಲಿ ಹೇಗೆ ಕೂಡುವುದಿಲ್ಲವೋ ಅದರಂತೆ ವಿಷ್ಣುವಿನಲ್ಲಿಯೂ ಸಹ ಕೂಡುವುದಿಲ್ಲ. ಏಕೆಂದರೆ ವಿಷ್ಣುವು ಭೂತಭಿನ್ನನಾದ್ದರಿಂದ. ಹೀಗಿರುವಾಗ ಸರ್ವಭೂತಗಳು ವಿಷ್ಣುವಿನ ಒಂದಂಶವೆಂದು ಹೇಗೆ ಹೇಳುತ್ತೀರಿ? ಈ ಶಂಕೆಗೆ ಉತ್ತರರೂಪವಾಗಿ ''ಸುವರ್ಣಂ'' ಇತ್ಯಾದಿಭಾಷ್ಯವು ಹೊರಟಿದೆ.

**नायं पादशब्दोऽमृतपादत्रयवद्भूतानामपि स्वरूपांशत्वाभिप्रायः किन्तु यज्ञदत्तस्य चतुर्भागबलो देवदत्त इतिवद्भिन्नमेव विश्वं तत्पादपरिमितसामर्थ्यं पादतयोच्यते । अतो भूतपादत्वं विष्णोरुपपद्यते ।**

---

सत्तर्कदीपावल्याम् – पादं न विवित्से इति पादसाम्यं न लेभे इत्युक्तम् । अत्र पक्षद्वयेऽपि पुरुषव्यत्ययस्तुल्यः । टीकाकृत्पक्षे लकारव्यत्ययश्च । यद्वा – लिङ्गव्यत्ययस्य छान्दसत्वं कोशमित्यस्य द्वितीयान्तत्वं चोपेत्य स्त्रीलिङ्गपदानामपि कोशविशेषणत्वेनैक एवान्वयः ॥

**(त) तर्हि विश्वचतुष्टयसमो हरिरित्यागतमिति । न मन्तव्यम् । यतोऽत्र पादपदेन विश्वं विष्णुसामर्थ्यैकदेशपरिमितमुच्यते न चतुर्थांशपरिमितम् । कुत एतत्? 'सुवर्णं कोशम्' इति श्रुतेरेवेत्यर्थः ।**

ಇಲ್ಲಿರುವ 'ಪಾದ'ಶಬ್ದವು ಅಮೃತಸ್ವರೂಪವಾದ ಮೂರು ಪಾದಗಳಂತೆ ಭೂತಗಳ ಸ್ವರೂಪಾಂಶವೆಂಬ ವಿವಕ್ಷೆಯಿಂದ ಪ್ರಯೋಗಿಸಲ್ಪಟ್ಟಿಲ್ಲ. ಹೊರತಾಗಿ ಯಜ್ಞದತ್ತನ ನಾಲ್ಕರಷ್ಟು ಬಲ ದೇವದತ್ತನಿಗಿದೆ ಎಂದು ಹೇಳಿದಂತೆ ಪರಮಾತ್ಮನಿಗಿಂತ ಭಿನ್ನವಾದ ವಿಶ್ವವು ಅವನ ಏಕದೇಶ-ಸಾಮರ್ಥ್ಯದ ಸದೃಶವಾದ ಸಾಮರ್ಥ್ಯವುಳ್ಳದ್ದಾಗಿದೆಯೆಂದು ಪಾದಶಬ್ದದಿಂದ ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಆದ್ದರಿಂದ ಭೂತಪಾದತ್ವವು ವಿಷ್ಣುವಿಗೆ ಉಪಪನ್ನವಾಗಿದೆ.

ಹಾಗಾದರೆ ಭಗವಂತನು ಜಗತ್ತಿನ ನಾಲ್ಕರಷ್ಟಿದ್ದಾನೆ ಎಂಬುದಾಗಿ ಪರಿಮಿತಸಾಮರ್ಥ್ಯವನ್ನು ಹೇಳಿದಂತಾಯಿತಲ್ಲವೇ? ಎಂದು ತಿಳಿಯಬಾರದು. ಏಕೆಂದರೆ ಶ್ರುತಿಯಲ್ಲಿ ಪಾದಶಬ್ದದಿಂದ ವಿಷ್ಣುವಿನ ಸಾಮರ್ಥ್ಯದ ಏಕದೇಶಸಾಮರ್ಥ್ಯದ ಪರಿಮಿತಿಯನ್ನು ಜಗತ್ತು ಹೊಂದಿದೆ ಎಂದು ಹೇಳಲಾಗಿದೆ. ಹೊರತು ಭಗವಂತನ ಸಾಮರ್ಥ್ಯದ ನಾಲ್ಕನೆಯ ಒಂದಂಶ ಜಗತ್ತಾಗಿದೆ ಎಂದಲ್ಲ. ಹೀಗೇಕೆ ಅರ್ಥೈಸಬೇಕೆಂದರೆ 'ಸುವರ್ಣಕೋಶಮ್' ಎಂಬ ಶ್ರುತಿಯಿರುವುದರಿಂದ ಎಂದು ತಿಳಿಯಬೇಕು.

**(त) सौवर्णब्रह्माण्डकोशं रजोगुणोपलक्षिताबादिपरिवृतं ब्रह्मणः शरीरं देवानां वसुनिधानमञ्जूषां मुक्तैः पूर्णां तां षडिन्द्रियेषु विषयहोतुर्विष्णोरेकदेशपरिमिता-माचक्षते पादपदेन पुरुषसूक्तादि आगमाः । **यतः सा (चतुर्भाग)चतुर्थ-भागसाम्यं न लेभे किलेत्यर्थः ।**

-- पादशब्दस्यार्थं विवृणोति – सुवर्णं कोशमित्यादिना ॥ सुवर्णमयमण्डकोशं सत्वरजस्तमोभिः परिवृतं देवानां द्रव्यनिधानस्थानं विशेषेण राजन्तं षड्होतुर्विष्णोः कलां विचक्षते । अमृतस्येति षष्ठी तृतीयार्थे, अमृतेन पूर्णमित्यर्थः । एकवचनं समुदायापेक्षया, 'अमृतस्यैष सेतुः' इतिवत् । न किल षड्होतुः पादत्वं स विवित्से अविन्दत । एतदुक्तं भवति – उदकादिनवावरणावृतं महतां देवानां वसुनिधानं हेमाण्डकोशं मुक्तजनेन व्याप्तं विष्णोः कलामात्रं वदन्ति पुरुषसूक्तागमाः पादवचनेन । न किलात्र पादशब्देनाङ्घ्रिं वदन्ति । नापि चतुर्थांशं, किं तर्हि? एकदेशमात्रम् । एकदेशमात्रमित्येकदेशपरिमाणपरिमितमुच्यते, न तत्स्वरूपैकदेश इति । यथा 'मैत्रचतुर्भागबलश्चैत्रः' इत्युक्ते न मैत्रबलादेव चैत्रस्य चतुर्थांशो विवक्षितः । अपि तु

ಸುವರ್ಣಾತ್ಮಕವಾದ ಈ ಬ್ರಹ್ಮಾಂಡವೆಂಬ ಕೋಶವು ರಜೋಗುಣದಿಂದ ಉಪಲಕ್ಷಿತವಾದ ಉದಕಾದಿಗಳಿಂದ (ನೀರು ಮೊದಲಾದ ಪಂಚಭೂತಗಳಿಂದ) ಸುತ್ತುವರೆಯಲ್ಪಟ್ಟಿದೆ. ಬ್ರಹ್ಮದೇವರ ಶರೀರಭೂತವಾಗಿದೆ. ದೇವತೆಗಳ ಸಂಪತ್ತಿಗೆ ಪೆಟ್ಟಿಗೆಯಂತಿದೆ. ಮುಕ್ತಜೀವರಿಂದ ಪರಿಪೂರ್ಣ-ವಾಗಿದೆ. ಇಂತಹ ವಿಶ್ವವು ಆರು ಇಂದ್ರಿಯಗಳಲ್ಲಿ ವಿಷಯಗಳನ್ನು ಹೋಮಿಸುವ ವಿಷ್ಣುವಿನ ಏಕದೇಶಪರಿಮಾಣವುಳ್ಳದ್ದಾಗಿದೆಯೆಂದು ಪುರುಷಸೂಕ್ತಾದಿ ಆಗಮಗಳಲ್ಲಿ ಪಾದಶಬ್ದದಿಂದ ಹೇಳ-ಲ್ಪಟ್ಟಿದೆ. ಏಕೆಂದರೆ ವಿಶ್ವವು ಪರಮಾತ್ಮನ ಸಾಮರ್ಥ್ಯದ ನಾಲ್ಕನೆಯ ಒಂದಂಶದ ಸಾಮರ್ಥ್ಯವನ್ನೂ ಹೊಂದಿಲ್ಲವಷ್ಟೇ ಎಂದು ಅರ್ಥ ಹೇಳಲ್ಪಟ್ಟಿದೆ.

भावदीपः – **'भिन्नं च'** इत्यन्तभाष्यग्रहणाय **'सुवर्णमिति'** इति प्रतीक-मनुपादाय 'सुवर्णमित्यादि' इत्युक्तम् । 'शङ्काबीजं विघटयन्नुक्तशङ्कानिरासकं पाद' इत्यादिवाक्यं तावद् व्याचष्टे – **नायमिति ॥ भिन्नमेवेति ॥** 'भाष्ये भिन्नं चेति चोऽवधारणे' इति भावः । 'विश्वम्' इति शेषः । **'एकदेशपरिमितम्'** इत्यस्यार्थः – **तत्पादेति ॥** 'विष्णुपादे'त्यर्थः । 'पाद इति' इत्यस्यार्थः – **पादतयेति ॥** 'उच्यते' इति शेषः । 'अतः' इति फलोक्तिः ।

तर्हि भाष्ये 'पादपरिमितः' इत्यनुक्त्वा 'एकदेशः' इति कस्मादुक्तम्? इत्यतः तद् व्यावर्त्यमाह – **तर्हीति ॥** तत्र हेतुतया 'पाद इत्येकदेशपरिमितिम्' इत्येतदेव

तच्चतुर्थांशपरिमितं भिन्नं च ततश्चैत्रबलमिति । एवमिहापि शक्तिविवक्षया विष्णु-शक्त्येकदेशपरिमितशक्तिर्मुक्तामुक्तविश्वसमुदाय इत्यभिप्रायः । **– तत्त्वप्रदीपिका**

–– ''यतो नवावरणोपेतब्रह्माण्डकोशाख्या सा देवानां वसुधानी सत्यकैलासस्वर्गादि-लोकस्थितदेववसुनिधानयोग्या मञ्जूषा षड्ढोतुरनन्तजीवानां षडिन्द्रियेषु तत्तद्विषय-समर्पकस्य वैराग्यसम्पत्तौ सत्यां षडिन्द्रियेषु विषयहोतुर्वा विष्णोः पादं पादत्वं चतुर्भागसाम्यम् आ ईषदपि न विवित्से किल न लेभे किल । एकैक जीवषडिन्द्रियेषु विषयहोमेऽप्यसमर्थब्रह्मादीनाम् अनन्तांशसाम्यस्याप्यसम्भवेन चतुर्भागसाम्यं तु सुतरां न सम्भवतीति सूचनाय षड्ढोतुरिति विशेषणम् । अतस्तां देवानां वसुधानीं षड्ढोतुर्विष्णोः कलामनन्तांशेषु चैकांशस्याप्येकदेशपरिमितामाचक्षते ज्ञानिनः'' इति श्रुत्यर्थमभिप्रेत्याह – सौवर्णमित्यादिना ॥ **– गुर्वर्थदीपिका**

––** प्रकारान्तरेण पादमित्येतद्व्याख्याति – यतः सा चतुर्भागसाम्यमिति ॥ अनेन पादमिति भावप्रधानमित्युक्तं भवति । अनेन पादमिति भावप्रधानमित्युक्तं भवति । 'पुरुषसूक्ताद्याः कलामेव पादपदेनाचक्षते' इत्यत्र हेतुरुच्यत इति भावः । **– भावबोधः**

**वाक्यं व्याचष्टे – यतोऽत्रेति ॥** 'पादोऽस्येति श्रुतौ' इत्यर्थः । 'विराजम्' इत्यस्यार्थो 'ब्रह्मणः शरीरम्' इति । **अमृतस्य** = मुक्तैः । **कलां** = एकदेशपरिमिताम् । 'पाद'पदस्याऽऽवृत्त्या 'तां कलां पादमाचक्षत' इत्यस्य पर्यवसितार्थं वदन् कर्त्राकाङ्क्षां पूरयति – **पादेति ॥** 'से'ति शेषः । 'कला' इत्यर्थः । 'पादम्' इत्यस्यार्थः 'चतुर्भागसाम्यम्' इति । वक्ष्यति च सूत्रकार एव 'बुद्ध्यर्थः पादवत्' इति तृतीयेऽध्याये 'पाद इत्युक्तिर्बुद्ध्यारोहार्था' इति ।

'ಭಿನ್ನಂ ಚ' ಎಂಬಲ್ಲಿಯ ತನಕ ಇರುವ ಭಾಷ್ಯವನ್ನು ಸಂಗ್ರಹಿಸುವುದಕ್ಕಾಗಿ 'ಸುವರ್ಣಂ' ಎಂದಷ್ಟೇ ಪ್ರತೀಕವನ್ನು ಸ್ವೀಕರಿಸಿದೆ ಸುವರ್ಣಮಿತ್ಯಾದಿ ಎಂಬ ಪ್ರತೀಕವನ್ನು ಸ್ವೀಕರಿಸಿದ್ದಾರೆ. ಸಂಶಯಕ್ಕೆ ಕಾರಣವಾದದ್ದನ್ನು ನಿರಾಕರಿಸುತ್ತಾ ಹಿಂದಿನ ಶಂಕೆಯನ್ನು ಪರಿಹರಿಸುವ ಉದ್ದೇಶದಿಂದ ಭಾಷ್ಯದ ಪಾದ ಇತ್ಯಾದಿ ವಾಕ್ಯವನ್ನು ''ನಾಯಮ್'' ಇತ್ಯಾದಿಯಾಗಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ. ಟೀಕೆಯಲ್ಲಿ ''ಭಿನ್ನಮೇವ'' ಎಂದು ಹೇಳಿದ್ದರಿಂದ 'ಭಿನ್ನಂ ಚ' ಎಂಬ ಭಾಷ್ಯದಲ್ಲಿರುವ ಚಕಾರಕ್ಕೆ ಅವಧಾರಣಾರ್ಥವನ್ನು ಹೇಳಿದಂತಾಗುತ್ತದೆ. 'ವಿಶ್ವಮ್' ಎಂಬುದನ್ನು ಇಲ್ಲಿ ಶೇಷಪೂರಣೆ ಮಾಡಿಕೊಳ್ಳಬೇಕು. 'ಏಕದೇಶ-ಪರಿಮಿತಮ್' ಎಂಬುದರ ಅರ್ಥವನ್ನು ''ತತ್ಪಾದ'' ಎಂಬುದಾಗಿ ಹೇಳಿದ್ದಾರೆ. ವಿಷ್ಣುವಿನ ಪಾದ ಎಂದರ್ಥ. 'ಪಾದ' ಎಂಬುದರ ಅರ್ಥವನ್ನೇ ''ಪಾದತಯಾ'' ಎಂದಿದ್ದಾರೆ. ಇಲ್ಲಿ 'ಉಚ್ಯತೇ' ಎಂಬು-ದನ್ನು ಶೇಷಪೂರಣ ಮಾಡಿಕೊಳ್ಳಬೇಕು. 'ಅತಃ' ಎಂಬುದರಿಂದ ಫಲವನ್ನು ಹೇಳಿದ್ದಾರೆ.

ಈ ಅರ್ಥವನ್ನು ವಿವಕ್ಷಿಸುವುದಾದಲ್ಲಿ ಭಾಷ್ಯದಲ್ಲಿ 'ಪಾದಪರಿಮಿತಂ' ಎಂದೇ ಹೇಳಬೇಕಿತ್ತು. ಏಕದೇಶಪರಿಮಿತಂ ಎಂದು ಹೇಗೆ ಹೇಳಿದರು ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಉತ್ತರಿಸುವವರಾಗಿ, ಇದರಿಂದ ವ್ಯಾವರ್ತ್ಯವಾದದ್ದನ್ನು ''ತರ್ಹಿ'' ಎಂಬ ಟೀಕಾಮಾತಿನಿಂದ ಹೇಳುತ್ತಿದ್ದಾರೆ. ಈ ವಿಷಯದಲ್ಲಿ ಕಾರಣವನ್ನು ನೀಡುತ್ತಾ 'ಪಾದ ಇತ್ಯೇಕದೇಶಪರಿಮಿತಂ' ಎಂಬ ವಾಕ್ಯವನ್ನೇ ''ಯತಃ ಅತ್ರ'' ಎಂಬ ಟೀಕಾವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸಿದ್ದಾರೆ. ಅತ್ರ ಎಂಬ ಪದಕ್ಕೆ 'ಪಾದೋಽಸ್ಯ' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ಎಂದರ್ಥ. 'ವಿರಾಜಮ್' ಎಂಬ ಪದಕ್ಕೆ ಬ್ರಹ್ಮಣಃ ಶರೀರಮ್ ಎಂದರ್ಥ. 'ಅಮೃತಸ್ಯ' ಎಂಬ ಪದಕ್ಕೆ ಮುಕ್ತರಿಂದ ಎಂದರ್ಥ. ಕಲಾಂ ಎಂದರೆ ಏಕದೇಶಪರಿಮಿತವಾದದ್ದನ್ನು ಎಂದರ್ಥ. ಪಾದ ಎಂಬ ಪದವನ್ನು ಆವೃತ್ತಿಮಾಡಿಕೊಂಡು 'ತಾಂ ಕಲಾಂ ಪಾದಮಾಚಕ್ಷತೇ' ಎಂಬುದರ ಪರ್ಯವಸಿತಾರ್ಥವನ್ನು ಹೇಳುತ್ತಾ ಕರ್ತ್ರಾಕಾಂಕ್ಷೆಯನ್ನು ''ಪಾದ'' ಇತ್ಯಾದಿಯಾಗಿ ಪರಿಹರಿಸುತ್ತಿದ್ದಾರೆ. 'ಸಾ' ಎಂಬುದನ್ನು ಶೇಷಪೂರಣೆಮಾಡಿಕೊಳ್ಳಬೇಕು. ಕಲಾ ಎಂದು ಇದರರ್ಥ. 'ಪಾದಮ್' ಎಂಬುದರ ಅರ್ಥವೇ ಚತುರ್ಭಾಗಸಾಮ್ಯಮ್ ಎಂಬುದು.

ಸೂತ್ರಕಾರರೂ ಸಹ 'ಬುದ್ಧ್ಯರ್ಥಃ ಪಾದವತ್' ಎಂಬ ಮೂರನೆಯ ಅಧ್ಯಾಯದ ಸೂತ್ರದಲ್ಲಿ ಪಾದ ಎಂಬ ಮಾತು ಬುದ್ಧಿಯ ಆರೂಢಕ್ಕಾಗಿ ಎಂದು ಹೇಳಿದ್ದಾರೆ. ಅಂದರೆ ನಮಗೆ ಬರುವ ಆನಂದವು ದುಃಖಮಿಶ್ರಿತವಾಗಿದೆ. ಮತ್ತು ಭೌತಿಕವಾಗಿದೆ. ಇದೇ ಆನಂದಪದವನ್ನು ಭಗವಂತನ ಆನಂದದಲ್ಲಿ ಪ್ರಯೋಗಿಸುವುದು ತಪ್ಪಲ್ಲವೇ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ಸೂತ್ರಕಾರರು 'ಬುದ್ಧ್ಯರ್ಥಃ ಪಾದವತ್' ಎಂದು

ಉತ್ತರಿಸಿದ್ದಾರೆ. ಮಣ್ಣಿನಲ್ಲಿ ಹೆಜ್ಜೆಯ ಗುರುತನ್ನು ನೋಡಿ ಪಾದ ಎಂಬ ವ್ಯವಹಾರವಿದೆ. ವಸ್ತುತಃ ಪಾದವೇ ಬೇರೆ, ಹೆಜ್ಜೆಯ ಗುರುತೇ ಬೇರೆ. ಅದರಂತೆ ನಮ್ಮ ಆನಂದಕ್ಕಿಂತ ಭಗವಂತನ ಆನಂದವು ಅತ್ಯಂತ ವಿಲಕ್ಷಣವಾಗಿದ್ದರೂ ನಮಗೆ ಅರ್ಥವಾಗುವುದಕ್ಕೋಸ್ಕರ (ಬುದ್ಧ್ಯಾರೂಢಕ್ಕಾಗಿ) ಆನಂದ ಎಂಬ ಪದವನ್ನು ವ್ಯವಹರಿಸಲಾಗಿದೆ. ಅದರಂತೆ ಪ್ರಕೃತದಲ್ಲಿ ಚತುರ್ಭಾಗಸಾಮ್ಯಮ್ ಎಂಬರ್ಥವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ. ಇದನ್ನು ಕೇವಲ ಬುದ್ಧ್ಯಾರೂಢಕ್ಕಾಗಿ ಹೇಳಿದ್ದಾರೆಂದು ತಿಳಿಯಬೇಕು ಹೊರತು ಶಬ್ದದ ಅರ್ಥವಲ್ಲ.

## ಪುರುಷಸೂಕ್ತಪ್ರತಿಪಾದ್ಯನೇ ಗಾಯತ್ರೀ

**भाष्यम् – स हि पुरुषसूक्ताभिधेयः ।**

**'यज्ञेन यज्ञमयजन्त' (तै.आ. ३-१२.) इति यज्ञशब्दात् ।**

**'यज्ञो विष्णुर्देवता' (श्रुत्यन्तरम्.) इति हि श्रुतिः ।**

**'तस्मिन् काले महाराज राम एवाभिधीयते ।**
**यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते ॥' इति च स्कान्दे ॥**

ಭಾಷ್ಯಾರ್ಥ -- ಇಂತಹ ಪರಮಾತ್ಮನು ಪುರುಷಸೂಕ್ತದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆ. ಏಕೆಂದರೆ ಪುರುಷಸೂಕ್ತದ ಕೊನೆಯಲ್ಲಿ 'ಯಜ್ಞೇನ ಯಜ್ಞಮಯಜಂತ' ಎಂಬುದಾಗಿ ಯಜ್ಞಶಬ್ದವಿದೆ. ಯಜ್ಞಶಬ್ದಕ್ಕೆ ವಿಷ್ಣುದೇವತೆ ಎಂಬರ್ಥವನ್ನು ಶ್ರುತಿಯೇ ಹೇಳಿದೆ. ಮತ್ತು 'ಯಾವ ರೀತಿಯಾಗಿ ಪುರುಷಸೂಕ್ತವು ವಿಷ್ಣುವನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತದೋ; ಅದರಂತೆ ತ್ರೇತಾಯುಗದಲ್ಲಿ ಎಲ್ಲೆಡೆಯೂ ರಾಮನೇ ಮಹಾರಾಜನೆಂಬುದಾಗಿ ಕೇಳಿಬರುತ್ತಿದ್ದಾನೆ' ಎಂಬುದಾಗಿ ಸ್ಕಾಂದಪುರಾಣವು ಹೇಳಿದೆ. ಇದರಿಂದ ಗಾಯತ್ರೀ ಜ್ಯೋತಿ ಮೊದಲಾದ ಶಬ್ದಗಳಿಂದ ವಿಷ್ಣುವೇ ವಾಚ್ಯನೆಂದು ಸಿದ್ಧವಾಗುತ್ತದೆ.

---

भाष्यदीपिका – स्यादेतदेवं यदि 'तावान्' इत्यस्यामृचि विष्णुरभिधीयते इत्यत्र प्रमाणं स्यात्, तदेव नास्ति, अतो लिङ्गमन्यनिष्ठं भविष्यतीत्यतः सौत्रचशब्देन भूतादिपादत्वस्य विष्णुलिङ्गत्वे साध्ये पुरुषसूक्तोक्तत्वादिति यदनुमानं सूचितं तस्याप्रयोजकत्वमाशङ्क्य परिहरति – स हीति ॥ 'हि' यस्मात् 'सः' विष्णुरेव 'पुरुषसूक्ताभिधेयः' तत्प्रतिपाद्यः तस्मात् स एव पुरुषसूक्तोक्तभूतादिपादोऽपीति योजना । अन्यथा भूतादिपादत्वस्य विष्णुधर्मत्वाभावे पुरुषसूक्तप्रतिपाद्यत्वं न स्यादिति भावः । यद्वा – गायत्र्या विष्णुत्वे साध्ये सूत्रे भिन्नक्रमेणान्वितचशब्द-सूचितयुक्त्यन्तरमाह – स हीति ॥ अस्य तस्माद् गायत्री विष्णुरेवेति प्रधान-

ಪ್ರತಿಪದಾರ್ಥ - 'ತಾವಾನಸ್ಯ' ಎಂಬ ಶ್ರುತಿಯಿಂದ ವಿಷ್ಣುವೇ ಪ್ರತಿಪಾದ್ಯನೆನ್ನಲು ಪುರುಷಸೂಕ್ತ ಪ್ರತಿಪಾದ್ಯತ್ವವನ್ನು ಸಮರ್ಥಿಸುತ್ತಿದ್ದಾರೆ.

ಸ ಹಿ = ಅಂತಹ ವಿಷ್ಣುವೇ, ಪುರುಷಸೂಕ್ತಾಭಿಧೇಯಃ= ಪುರುಷಸೂಕ್ತದಿಂದ ಪ್ರತಿಪಾದ್ಯನಾದವನು, ಯಜ್ಞೇನ = ಸತ್ಕರ್ಮಗಳಿಂದ, ಯಜ್ಞಂ = ಯಜ್ಞನಾಮಕನಾದ ವಿಷ್ಣುವನ್ನು, ಅಯಜಂತ = ಪೂಜಿಸಿದರು. ಇತಿ = ಹೀಗೆ, ಯಜ್ಞಶಬ್ದಾತ್ = ಯಜ್ಞಶಬ್ದದ ಬಲದಿಂದ (ವಿಷ್ಣುವೇ ಯಜ್ಞಶಬ್ದವಾಚ್ಯನಾಗಿದ್ದಾನೆ).

---

प्रतिज्ञावाक्येनान्वयः । चतुष्पदेत्युक्तगायत्रीचतुष्पादत्वस्य पुरुषसूक्तमन्त्रेणोपपादनात् तत्प्रतिपाद्यत्वे तदुपपाद्यगायत्रीशब्दार्थताऽपि तस्यैव प्राप्नोतीति भावः ॥

पुरुषसूक्तोक्तस्य विष्णुत्वं कुत इत्यत आह – यज्ञेनेति ॥ देवाः 'यज्ञेन' ज्ञानकर्मात्मकेन रुद्राख्यपशुना वा 'यज्ञं' विष्णुम् 'अयजन्त' अपूजयन्निति श्रुत्यर्थः । इति यज्ञशब्दादिति ॥ इति वाक्ये यज्ञशब्दश्रवणादित्यर्थः ॥

यज्ञशब्दः कथं विष्णुत्वनिश्चायक इत्यतो विद्वद्रूढ्येत्याह – यज्ञ इति ॥ 'हि' यतः यज्ञ इति पदेन विष्ण्वाख्या देवतोच्यत इत्यर्थः । यद्यपि 'यज्ञो वै विष्णुः' इत्यध्वर्यूणां श्रुतिः । तथाऽपि श्रुत्यन्तरमिदमित्यदोषः ॥

ननु पुरुषसूक्तं न विष्णुप्रकरणं, किन्त्वन्यप्रकरणमेव । न च यज्ञश्रुतिविरोधः । पशुरूपान्यप्रकरणे तदन्यविष्णुश्रुतेरयोगादिति वाच्यम् । तस्याः प्रासङ्गिकत्वसम्भवात् । न च तत एव भूतादिपादत्वस्य विष्णुलिङ्गत्वनिश्चयः । तथाऽप्यसिद्धिः । 'पादोऽस्य विश्वा भूतानि' इति श्रुतेर्भूतादिपादे यज्ञश्रुतेरभावादित्यतः पुरुषसूक्तोक्तस्य विष्णुत्वे स्मृतिं चाऽह – तस्मिन्निति ॥ महाराजेति कस्यचित् सम्बोधनं रामविशेषणं वा । तथात्वे दीर्घः स्यात् । तथा च हे महाराज 'तस्मिन्' त्रेतायुगे सर्वैः पुरुषनामभी राम एवाभिधीयत इत्यर्थः ॥

अत एवांशाधिकरणे -

**'नक्षत्रमानगणितं त्रयोदशसहस्रकम् ।**
**ब्रह्मलोकसमं चक्रे समस्तं क्षितिमण्डलम् ॥**
**रामोराम इति ह्याख्या सर्वेषामभवत् तदा ।**
**सर्वो राममयो लोको यदा रामस्त्वपालयत् ॥'**

इति स्कान्द इत्युक्तं तत्त्वप्रदीपे ॥

अत्र दृष्टान्तमाह – यथेति ॥ यथा कृत्स्ने पौरुषे सूक्ते विष्णुरेव न त्वन्यः । पशुः नरः प्रासङ्गिकतयाऽभिधीयत इत्यर्थः । अनेन सिद्धस्यैव दृष्टान्तत्वात् पुरुषसूक्तस्य विष्णुपरत्वं सिद्धमिति भावः । स्कान्द इत्यनन्तरं एतदुक्तमिति शेषः । अस्य स हीति पूर्ववाक्येनान्वयः ॥

ಯಜ್ಞಃ = ಯಜ್ಞಶಬ್ದವು, ವಿಷ್ಣುರ್ದೇವತಾ = ವಿಷ್ಣುವೆಂಬ ದೇವತಾವಾಚಕವಾಗಿದೆ, ಇತಿ = ಹೀಗೆ, ಶ್ರುತಿಃ ಹಿ = ಶ್ರುತಿಯು ಪ್ರಸಿದ್ಧವಷ್ಟೇ.

ಯಥಾ = ಹೇಗೆ, ಪೌರುಷೇ ಸೂಕ್ತೇ = ಪುರುಷಸೂಕ್ತದಲ್ಲಿ, ವಿಷ್ಣುರೇವ = ವಿಷ್ಣುವೊಬ್ಬನೇ, ಅಭಿಧೀಯತೇ = ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೋ, ತಥಾ = ಹಾಗೆ, ತಸ್ಮಿನ್ ಕಾಲೇ = ಆ ತ್ರೇತಾಯುಗದಲ್ಲಿ, ರಾಮಃ ಏವ = ಶ್ರೀರಾಮಚಂದ್ರನೇ, ಮಹಾರಾಜಃ = ಮಹಾರಾಜನೆಂದು, ಅಭಿಧೀಯತೇ = ಕರೆಸಿಕೊಳ್ಳುತ್ತಾನೆ, ಇತಿ ಚ = ಹೀಗೆಯೂ ಸ್ಕಾಂದೇ = ಸ್ಕಾಂದಪುರಾಣದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟಿದೆ.

**तत्वप्रकाशिका – न केवलं भूतादिपादत्वस्य विष्णावेवोपपत्तेस्तल्लिङ्गत्वं किन्तु पुरुषसूक्तोक्तत्वाच्च* । भूतादिपादत्वस्य पुरुषसूक्तोक्तत्वेऽपि कुतो (विष्णु-लिङ्गत्व)विष्णोर्लिङ्गत्वमित्यत आह – स हीति ॥ यज्ञशब्दः कथं तन्निश्चायक इत्यत आह – यज्ञ इति ॥ अन्यप्रकरणेऽप्यन्यश्रुतिः प्रासङ्गिकीयं भवतु । भूतादि-पादे तदभावादित्यतोऽत्र स्मृतिं चाऽऽह – तस्मिन्निति ॥ किञ्च पुरुषसूक्तोक्तत्वं गायत्र्या विष्णुत्व एव वा पृथग्युक्तिः समर्थ्यते – स हीति ॥२६॥**

ಭೂತಾದಿಪಾದತ್ವವು ವಿಷ್ಣುವಿನಲ್ಲಿ ಮಾತ್ರ ಉಪಪನ್ನವಾಗುತ್ತದೆಂಬ ಅಭಿಪ್ರಾಯದಿಂದ ಅದನ್ನು ವಿಷ್ಣುಲಿಂಗವೆಂದು ಹೇಳಿದ್ದಲ್ಲ. ಹೊರತಾಗಿ ಪುರುಷಸೂಕ್ತದಲ್ಲಿಯೂ ಹಾಗೆಯೇ ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಪುರುಷಸೂಕ್ತದಲ್ಲಿ ಹೇಳಿದ ಮಾತ್ರದಿಂದ ಅದು ವಿಷ್ಣುಲಿಂಗವೆಂದು ಹೇಗೆ ನಿಶ್ಚಯಿಸುತ್ತೀರಿ ಎಂಬ ಪ್ರಶ್ನೆಗೆ ''ಸ ಹಿ'' ಎಂಬ ವಾಕ್ಯದಿಂದ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ. ಯಜ್ಞಶಬ್ದವು ವಿಷ್ಣುತ್ವವನ್ನು ಹೇಗೆ

---

* किन्तु पुरुषसूक्तोक्तत्वाच्चेति । अनेन सौत्रश्चशब्दः प्रकारान्तरेण व्याख्यातो भवति । विष्णुत्व एव वा पृथग्युक्तिरिति । गायत्रीशब्दवाच्ये 'एतावानस्य महिमा' इत्यादिना पुरुषसूक्तमन्त्रोदाहरणात् पुरुषसूक्तप्रतिपाद्यश्च यतो विष्णुरेवेति भाष्याभिप्राय इत्यर्थः । अनेन 'एतावानस्य महिमा अतो ज्यायांश्च पूरुषः' इत्यादिशब्दसहितलिङ्गैश्चेति न्यायविवरणमुक्तार्थं भवति । अक्षरयोजना तु – तावानस्य महिमा इत्यत्र पुरुषशब्द आदिपदेन 'यद्वै ततमेव ब्रह्मोपनिषदं वेद' इति ब्रह्मशब्द एतत् सहितलिङ्गैर्लिङ्गानि च भूतादिपादत्वं पुरुषसूक्तोक्तत्वमेव नातिशीयन्ते इति सर्वोत्तमत्वम् इत्यादीनि । अत एव 'बाहुल्यात् श्रुतिलिङ्गयोः' इत्यनुव्याख्यानं तथैव सुधायां व्याख्यातम् । अत्राप्यनन्यथासिद्धत्वं ग्राह्यम् । 'अनन्यथासिद्धलिङ्गैः' इत्युक्तगानत्राणकर्तृत्वलिङ्गेन शब्दसहितलिङ्गैश्च भगवद्विषयत्वमेव अधिगतगायत्रीशब्दस्येति । अनेन न्यायविवरण-वाक्येन सूत्रगतः 'च'शब्दो न केवलं प्रागुक्तगानत्राणकर्तृत्वसमुच्चयार्थः, किन्तु सर्वोत्तमत्वलिङ्गपुरुषब्रह्मशब्दसमुच्चयार्थश्चेत्युक्तं भवतीति भावः । – (भावबोधः)

ನಿಶ್ಚಯಿಸುತ್ತಿದೆ ಎಂಬ ಪ್ರಶ್ನೆಗೆ "ಯಜ್ಞ" ಎಂಬ ವಾಕ್ಯದಿಂದ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ. ಪುರುಷಪಶು-ಪರವಾದ ಪುರುಷಸೂಕ್ತದಲ್ಲಿ ವಿಷ್ಣುಪರಶ್ರುತಿಯು ಪ್ರಾಸಂಗಿಕವಾಗಿ ಬಂದಿದೆಯೆಂದು ಹೇಳೋಣ. ಆದ್ದರಿಂದ ಭೂತಾದಿಪಾದತ್ವವು ವಿಷ್ಣುವಿಗೆ ಸಂಬಂಧಿಸಿದ ಧರ್ಮವಲ್ಲವೆಂಬ ಶಂಕೆಗೆ ಸ್ಮೃತಿಯನ್ನು ಉದಾಹರಿಸಿ ಉತ್ತರಿಸುತ್ತಿದ್ದಾರೆ "ತಸ್ಮಿನ್" ಇತ್ಯಾದಿಯಾಗಿ. ಅಥವಾ ಪುರುಷಸೂಕ್ತದಲ್ಲಿ ಹೇಳಲ್ಪಟ್ಟ ಯುಕ್ತಿಯು ಗಾಯತ್ರಿಗೆ ವಿಷ್ಣುತ್ವಸಮರ್ಥಕವೇ ಆಗಿದೆಯೆಂದು "ಸಹಿ ಪುರುಷಸೂಕ್ತಾಭಿಧೇಯಃ" ಎಂಬುದರಿಂದ ಹೇಳಿದ್ದಾರೆ.

**भावदीपः – सौत्रचशब्दस्यार्थान्तरमुपेत्य 'स हि'** इत्यादिभाष्यं प्रवृत्तमिति भावेन आह – **न केवलमिति ॥**

**अन्येति ॥ 'पुरुषपशुप्रकरणे'** इत्यर्थः । यथा षट्प्रश्ने प्राणप्रकरणे **'हृदि ह्येष आत्मा'** इति जीवश्रुतिः । यथा वा काण्वश्रुतौ **'नैवेह किञ्चन'** इति मृत्युप्रकरणे, **'स एव प्राणस्त्रेधा विहितः'** इति प्राणश्रुतिस्तथेति भावः । **पृथगुक्तिरिति ॥** – न केवलं भूतादिपादव्यपदेशात् किन्तु गायत्र्या प्रतिज्ञातचतुष्पादत्वस्य पुरुषसूक्तमन्त्रेणोपादानेन पुरुषसूक्तोक्तत्वाच्च एवं गायत्री विष्णुरिति भावेन तस्य विष्णुपरत्वसमर्थनपरं 'स हि' इति भाष्यम् - इत्यर्थः ॥२६॥

ಸೂತ್ರದಲ್ಲಿರುವ ಚಶಬ್ದಕ್ಕೆ ಮತ್ತೊಂದು ಅರ್ಥವನ್ನು ವಿವಕ್ಷಿಸಿ 'ಸಹಿ' ಇತ್ಯಾದಿ ಭಾಷ್ಯವು ಹೊರಟಿದೆ ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ "ನ ಕೇವಲಮ್" ಇತ್ಯಾದಿ ವಾಕ್ಯವು ಹೊರಟಿದೆ. "ಅನ್ಯ" ಎಂದರೆ ಪುರುಷಪಶುಪ್ರಕರಣದಲ್ಲಿ ಎಂದರ್ಥ. ಯಾವ ರೀತಿಯಾಗಿ ಷಟ್ಪ್ರಶ್ನದಲ್ಲಿ ಬರುವ ಪ್ರಾಣಪ್ರಕರಣದಲ್ಲಿ 'ಹೃದಿ ಹ್ಯೇಷ ಆತ್ಮಾ' ಎಂಬ ಜೀವಶ್ರುತಿಯು ಕೇಳಿಸುತ್ತಿದೆಯೋ ಅಥವಾ ಕಾಣ್ವಶ್ರುತಿಯಲ್ಲಿ ಪ್ರಸಕ್ತವಾಗುವ 'ನೈವೇಹ ಕಿಂಚನ' ಎಂಬ ಮೃತ್ಯುಪ್ರಕರಣದಲ್ಲಿ 'ಸ ಏವ ಪ್ರಾಣಸ್ತ್ರೇಧಾ ವಿಹಿತಃ' ಎಂಬ ಪ್ರಾಣಶ್ರುತಿಯು ಕೇಳಿಸುತ್ತಿದೆಯೋ ಅದರಂತೆ ಎಂದು ತಿಳಿಯಬೇಕು.

ಟೀಕೆಯಲ್ಲಿ "ಪೃಥಗ್ ಯುಕ್ತಿಃ" ಎಂದಿದ್ದಾರೆ. ಕೇವಲ ಭೂತಾದಿಪಾದವ್ಯಪದೇಶವೆಂಬ ಲಿಂಗದಿಂದಷ್ಟೇ ವಿಷ್ಣುವು ಗಾಯತ್ರಿ ಎನಿಸುವುದಿಲ್ಲ. ಹೊರತಾಗಿ ಗಾಯತ್ರಿಯ ಜೊತೆಗೆ ಪ್ರತಿಜ್ಞೆಮಾಡಲ್ಪಟ್ಟ ಚತುಷ್ಪಾದತ್ವವು ಪುರುಷಸೂಕ್ತಮಂತ್ರದಿಂದ ಸಮರ್ಥಿತವಾದ್ದರಿಂದಲೂ ಸಹ ಗಾಯತ್ರಿಯು ವಿಷ್ಣುವೇ ಆಗಿದ್ದಾನೆ ಎಂಬ ಅಭಿಪ್ರಾಯದಿಂದ ಗಾಯತ್ರಿಗೆ ವಿಷ್ಣುತ್ವವನ್ನು ಸಮರ್ಥಿಸಲು 'ಸಹಿ' ಎಂಬ ಭಾಷ್ಯವು ಹೊರಟಿದೆಯೆಂದು ಇದರ ಅರ್ಥ.

**वाक्यार्थमञ्जरी – ॐ भूतादिपादव्यपदेशोपपत्तश्चैवम् ॐ ॥** एवं गायत्री ब्रह्मैव । 'पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि' इति गायत्रीधर्मतया व्यपदिष्टजीवामृताख्यस्वरूपस्यांशकत्वस्य तस्मिन्नेवोपपत्तेरित्यर्थः ॥ **सैषेति ॥**

सैषा षड्विधा गायत्री भूतवाक् पृथिवी शरीरहृदयभेदेन षड्रूपा गायत्री चतुष्पदा भूतमूर्तित्रयाख्यांशवतीत्यर्थः । व्यपदिश्य विहित्वा । तत्रैव चतुष्पादत्व एव ॥ **तदेतदिति** ॥ तदेतद् भगवतश्चतुष्पादत्वं ऋचा मन्त्रान्तरेण अभि कथमेतदिति शङ्कामभि तदुत्तरत्वेनेति यावत् । अनु आनुकूल्येनोक्तमित्यर्थः । ज्यायान् अधिकमहिमाभूतानि जीवाः । पादत्रयं नारायणवासदेववैकुण्ठाख्यम् । दिवि अनन्तासश्वेतद्वीपवैकुण्ठेषु । पादत्रयस्येव भूतानामपि स्वरूपांशत्वमुच्यत इति भ्रान्तः शङ्कते – **नन्विति** ॥ भिन्नं चेत्यन्तग्रहणायसुवर्णमित्यादीत्यादिशब्दः । भाष्यमाकाङ्क्षाक्रमेण योजयति – **नायमिति** ॥ **विश्वचतुष्टयसम इति** ॥ विश्वबल-चतुष्टसामर्थ्यवानित्यर्थः । सा कला । उत्तरभाष्यं सङ्गमयितुमाह – **न केवल-मिति** ॥ तदभावाद् यज्ञश्रुत्यभावात् । अध्याहारे गौरवात्प्रकारान्तरमाह – **पुरुषसूक्तेति** ॥ पृथग् भूतादिपादत्वापेक्षया ॥

### ಶ್ರೀವೇದವ್ಯಾಸಪ್ರಣೀತ ಬ್ರಹ್ಮಮೀಮಾಂಸಾಶಾಸ್ತ್ರ

### सू - ॐ ॥ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ ॐ ॥ २७ ॥

ಸೂತ್ರಾರ್ಥ - ಗಾಯತ್ರೀಯು ದಿವಿಸ್ಥಿತತ್ವವಾಗಿದೆ; ಜ್ಯೋತಿಯು ದಿವಃಪರವಾಗಿದೆ. ಹೀಗಿರುವಾಗ ಗಾಯತ್ರೀ ಹಾಗೂ ಜ್ಯೋತಿಗೆ ಅಭೇದವನ್ನು ಹೇಳಲು ಹೇಗೆ ಸಾಧ್ಯ? ಎಂಬ ಶಂಕೆಯು ತಪ್ಪು. ಮೂರು ಅಥವಾ ಏಳು ಲೋಕಗಳ ವಿವಕ್ಷೆಯಿಂದ ಈ ವಿರೋಧವನ್ನು ಪರಿಹರಿಸಬಹುದು. ಆದ್ದರಿಂದ ಗಾಯತ್ರೀ ಹಾಗೂ ಜ್ಯೋತಿಯು ಒಬ್ಬನೇ ವಿಷ್ಣುವಾಗಬಹುದು.

**सूत्रदीपिका** – **उपदेशभेदात्** गायत्रीज्योतिषोः द्युस्थत्व'त्रिपादस्यामृतं दिवि' दिवःपरत्व'परो दिवः'रूपविरुद्धधर्मबोधकश्रुतिभेदात् **नेति चेत्**, तद् द्वयं विष्णवाख्यमेकं वस्तु न किन्तु भिन्नमेवेति चेन्न । कुतः? **उभयस्मिन्** श्रुतिवाक्येऽपि एकस्य प्रतिपाद्यत्वेऽपि **अविरोधात्** । त्रिसप्तलोकविवक्षया विरोधाभावादित्यर्थः ॥

ಉಪದೇಶಭೇದಾತ್ = ಗಾಯತ್ರಿಗೆ 'ತ್ರಿಪಾದಸ್ಯಾಮೃತಂ ದಿವಿ' ಎಂದು ದಿವಿಸ್ಥಿತತ್ವವನ್ನು, 'ಪರೋ ದಿವಃ' ಎಂಬುದಾಗಿ ಜ್ಯೋತಿಗೆ ದಿವಃಪರತ್ವವನ್ನು ಶ್ರುತಿಯು ಹೇಳುತ್ತಿದೆ. ಇವೆರಡೂ ವಿರುದ್ಧಧರ್ಮಗಳಾದ್ದರಿಂದ ಗಾಯತ್ರೀ ಮತ್ತು ಜ್ಯೋತಿ ಎರಡೂ ವಿಷ್ಣು ಎಂಬ ಒಂದೇ ವಸ್ತು ಆಗಲಾರವು. ನ = ಇದು ಸರಿಯಲ್ಲ; ಏಕೆಂದರೆ ಉಭಯಸ್ಮಿನ್ನಪಿ = ಶ್ರುತಿಯ ಎರಡು ವಿಧ ಹೇಳಿಕೆಗಳಲ್ಲಿ ಅವಿರೋಧಾತ್ = ವಿರೋಧವಿರುವುದಿಲ್ಲ, ಲೋಕಗಳನ್ನು ಮೂರು ಅಥವಾ ಏಳುವಿಧವಾಗಿ ವಿವಕ್ಷಿಸಿದಾಗ ವಿರೋಧಕ್ಕೆ ಅವಕಾಶವಿಲ್ಲ. ಗಾಯತ್ರೀ ಮತ್ತು ಜ್ಯೋತಿಯು ಒಬ್ಬನೇ ಆಗಬಹುದು.

ಗಾಯತ್ರ್ಯಧಿಕರಣ (೧೦।೧೦)

ವಿರುದ್ಧಾರ್ಥವುಳ್ಳ ಎರಡು ವಿಭಕ್ತಿಗಳು ಒಬ್ಬನನ್ನೇ ಹೇಳಲಾರವು.

**भाष्यम् – 'त्रिपादस्यामृतं दिवि' (छां. ३-१२-६.) इति पूर्वोपदेशः । 'परो दिवः' (छां. ३-१३-७.) इति पञ्चम्यन्तः पश्चिमः । तस्मान्नेकं वस्त्वत्रोच्यते इति चेत् —**

ಗಾಯತ್ರಿಯ ಮೂರುಪಾದಗಳು ದ್ಯುಲೋಕದಲ್ಲಿವೆ ಎಂದು ಮೊದಲು ಹೇಳಿ ಅನಂತರ ಜ್ಯೋತಿಯು ದ್ಯುಲೋಕಕ್ಕಿಂತ ಮೇಲಿದೆ ಎಂದು ಪಂಚಮೀವಿಭಕ್ತ್ಯಂತವಾದ ಪದದಿಂದ ಹೇಳಲ್ಪಟ್ಟಿದೆ. ಆದ್ದರಿಂದ ಎರಡೂ ಶಬ್ದಗಳಿಂದ ಒಂದೇ ವಸ್ತುವು ಪ್ರತಿಪಾದ್ಯವಾಗಲು ಸಾಧ್ಯವಿಲ್ಲ.

ಪ್ರತಿಪದಾರ್ಥ -- ಹಿಂದಿನ ಸೂತ್ರದಲ್ಲಿರುವ ಸಿದ್ಧಾಂತಾಂಶವನ್ನು ಆಕ್ಷೇಪಿಸಿ ಸಮಾಧಾನವನ್ನು ಹೇಳುತ್ತಿದ್ದಾರೆ.

ತ್ರಿಪಾದಸ್ಯ = ಮೂರು ಪಾದಗಳುಳ್ಳ, ಅಮೃತಂ = ನಾಶರಹಿತವಾದ ಸ್ಥಾನವು, ದಿವಿ = ದ್ಯುಲೋಕದಲ್ಲಿದೆ. ಇತಿ = ಹೀಗೆ, (ಸಪ್ತಮೀವಿಭಕ್ತ್ಯಂತವಾಗಿ) ಪೂರ್ವೋಪದೇಶಃ = ಮೊದಲು ಹೇಳಲ್ಪಟ್ಟಿದೆ.

ದಿವಃ = ದ್ಯುಲೋಕಕ್ಕಿಂತ, ಪರಃ = ಮೇಲ್ಭಾಗದಲ್ಲಿದೆ, ಇತಿ = ಎಂದು, ಪಂಚಮ್ಯಂತಃ = ಪಂಚಮೀವಿಭಕ್ತ್ಯಂತವಾಗಿ, ಪಶ್ಚಿಮಃ = ಅನಂತರ ಹೇಳಲ್ಪಟ್ಟಿದೆ. ತಸ್ಮಾತ್ = ಆದ್ದರಿಂದ, ಏಕಂ ವಸ್ತು = ಒಂದೇ ವಿಷ್ಣುವೆಂಬ ವಸ್ತುವು, ಅತ್ರ = ಈ ಪುರುಷಸೂಕ್ತದಲ್ಲಿ, ನ ಉಚ್ಯತೇ = ಪ್ರತಿಪಾದ್ಯವಾಗುವುದಿಲ್ಲ.

---

**भाष्यदीपिका** – उक्तमाक्षिप्य समादधत् सूत्रमुपन्यस्यति – उपदेशेति ॥ 'उपदेशयोः' सप्तमीपञ्चमीयुतवाक्ययोः 'उपदेशेन' गायत्रीज्योतिषोः द्युस्थत्वदिवःपरत्वरूप-विरुद्धधर्मोक्त्या 'भेदात्' विरोधान्न द्वयोर्विष्ण्वाख्यम् एकं वस्तु प्रतिपाद्यं, किन्तु भिन्नमेवेति चेत् न, किन्तु 'उभयस्मिन्' उभयत्राप्युपदेशे एकमेव प्रतिपाद्यं, कथम्? अविरोधात् । त्रिसप्तलोकापेक्षया सप्तमीपञ्चम्योः एकार्थत्वेन विरोधाभावादिति सूत्रयोजनामभिप्रयन्नाक्षेपांशं तावद् व्याचष्टे – त्रिपादिति ॥ 'पूर्वोपदेशः' पूर्वोक्तिः । 'पश्चिमः' पश्चात्तनः उत्तर उपदेशस्तद्भिन्नोऽस्तीति शेषः । विरोधस्फोरणाय पञ्चम्यन्त इत्याद्युक्तिः । उपक्रमगतस्य प्राबल्योपपादनाय पूर्व इत्युक्तिः । ततः किमित्यत आह – तस्मादिति ॥ यस्मादेवं भिन्नोपदेशद्वयमस्ति तस्मादत्रोपदेशद्वये गायत्रीज्योतिश्शब्दाभ्यां नैकं वस्तु विष्ण्वाख्यमुच्यते । कुतः? यतोऽत्र 'नैकम्' अनेकं वस्तु द्युस्थत्वदिवःपरत्वरूपं धर्मद्वयमुच्यते । किन्त्वत्र 'नैकम्' अनेकं वस्तुद्वयमुच्यत इति योजना ॥

**तत्वप्रकाशिका – उक्तमाक्षिप्य समादधत् सूत्रमुपन्यस्याक्षेपांशं तावद्व्याचष्टे – उपदेशेति ॥ यदुक्तं गायत्री ज्योतिश्च विष्णुरिति तद्भवेद्यदि गायत्रीज्योतिःप्रसङ्गयोरेकं वस्तूच्यते । न चैवम् । 'त्रिपादस्यामृतं दिवि' इति गायत्र्या द्यु(पद)स्थितत्वोक्त्या परो दिव इति ज्योतिषो दिवःपरत्वोक्त्या विरोधान्नैकं वस्त्वत्रोच्यते । अथ कथमुभयोः विष्णुत्वाध्यवसाय इत्यर्थः ।**

ಹಿಂದಿನ ಸೂತ್ರದಲ್ಲಿ ಪರಮಾತ್ಮನು ಗಾಯತ್ರೀಶಬ್ದವಾಚ್ಯನೆಂದು ಸಮರ್ಥಿಸಲಾಯಿತು. ಅದನ್ನು ಆಕ್ಷೇಪಿಸಿ ಸಮಾಧಾನವನ್ನು ಹೇಳುವ ಸೂತ್ರವನ್ನು ಉಪನ್ಯಾಸಮಾಡುತ್ತಾ, ಸೂತ್ರದಲ್ಲಿರುವ ಆಕ್ಷೇಪದ ಭಾಗವನ್ನು ''ಉಪದೇಶ'' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ.

ಗಾಯತ್ರೀ ಮತ್ತು ಜ್ಯೋತಿಶಬ್ದಗಳಿಂದ ವಿಷ್ಣುವೇ ಪ್ರತಿಪಾದ್ಯನೆಂದು ಏನು ಹೇಳಲ್ಪಟ್ಟಿತೋ ಅದು ಗಾಯತ್ರೀ ಮತ್ತು ಜ್ಯೋತಿಪ್ರಕರಣಗಳು ಒಂದೇ ವಸ್ತುವನ್ನು ಹೇಳುವುದಾದಲ್ಲಿ ಮಾತ್ರ ಅದು ಕೂಡುತ್ತದೆ. ಆದರೆ ಗಾಯತ್ರೀ ಜ್ಯೋತಿಪ್ರಕರಣಗಳು ಒಂದೇ ವಸ್ತುವನ್ನು ಪ್ರತಿಪಾದಿಸುತ್ತಿಲ್ಲ. ಏಕೆಂದರೆ 'ತ್ರಿಪಾದಸ್ಯಾಮೃತಂ ದಿವಿ' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ಗಾಯತ್ರಿಯು ದ್ಯುಲೋಕದಲ್ಲಿರುತ್ತದೆಂದು ಹೇಳಿ, 'ಪರೋ ದಿವಃ' ಎಂಬ ಶ್ರುತಿಯಲ್ಲಿ ದ್ಯುಲೋಕದ ಮೇಲ್ಭಾಗದಲ್ಲಿ ಜ್ಯೋತಿಯು ಇರುತ್ತದೆಂದು ಹೇಳಲಾಗಿದೆ. ಹೀಗೆ ಎರಡರ ಸ್ಥಾನವೂ ಭಿನ್ನಭಿನ್ನವಾದದ್ದರಿಂದ ಜ್ಯೋತಿ ಮತ್ತು ಗಾಯತ್ರೀಪದಗಳು ಒಂದೇ ವಸ್ತುವನ್ನು ಹೇಳಲಾರವು. ಆದ್ದರಿಂದ ಈ ಎರಡು ಶಬ್ದಗಳಿಂದ ವಿಷ್ಣುವೇ ಪ್ರತಿಪಾದ್ಯನೆಂಬ ನಿರ್ಣಯವನ್ನು ಹೇಗೆ ಮಾಡುತ್ತೀರಿ? ಎಂದು ಆಕ್ಷೇಪ ಭಾಗದ ಸೂತ್ರಾರ್ಥ.

**भावदीपः** – ॐ उपदेशभेदात् नेति चेन्न उभयस्मिन्नप्यविरोधात् ॐ ॥२७॥

'उक्तमाक्षिप्य' इत्युक्तं व्यञ्जयन् भाष्यं व्याचष्टे – यदुक्तमिति ॥

'ಉಕ್ತಮಾಕ್ಷಿಪ್ಯ' ಎಂಬ ತಮ್ಮ ಮಾತನ್ನೇ ಸ್ಪಷ್ಟ ಪಡಿಸುತ್ತಾ ಭಾಷ್ಯವನ್ನು 'ಯದುಕ್ತಂ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ.

## ಮೂರು ಹಾಗೂ ಏಳುಲೋಕಗಳ ವಿವಕ್ಷೆಯಿಂದ ವಿರೋಧಪರಿಹಾರ

**भाष्यम् – न, त्रिसप्तलोकापेक्षया उभयस्मिन्नप्यविरोधात् ॥**

॥ इति श्रीमदानन्दतीर्थभगवत्पादाचार्यविरचितब्रह्मसूत्रभाष्ये
छन्दोऽभिधानाधिकरणम् ॥ ११ ॥

ಗಾಯತ್ರ್ಯಧಿಕರಣ (೧।೧।೧೧)

ಇದು ತಪ್ಪು, ಮೂರು ಹಾಗೂ ಏಳು ಲೋಕಗಳೆಂಬ ಬೇರೆ ಬೇರೆ ವಿವಕ್ಷೆಯಿಂದ ಎರಡು ವಿಧಪ್ರಯೋಗಗಳಲ್ಲಿರುವ ವಿರೋಧವನ್ನು ಪರಿಹರಿಸಬಹುದು. ಆದ್ದರಿಂದ ಗಾಯತ್ರೀಶಬ್ದಪ್ರತಿಪಾದ್ಯನಾದವನು ಮತ್ತು ಜ್ಯೋತಿಶಬ್ದಪ್ರತಿಪಾದ್ಯನಾದವನು ವಿಷ್ಣುವೇ ಆಗುತ್ತಾನೆ.

ಪ್ರತಿಪದಾರ್ಥ -- ಇತಿ ಚೇನ್ನ = ಇದು ತಪ್ಪು, ತ್ರಿಸಪ್ತಲೋಕಾಪೇಕ್ಷಯಾ = ಮೂರು ಲೋಕ, ಹಾಗೂ ಏಳು ಲೋಕಗಳೆಂಬ ಉದ್ದೇಶದಿಂದ, ಉಭಯಸ್ಮಿನ್ನಪಿ = ಎರಡೂ ವಿಧಪ್ರಯೋಗಗಳಲ್ಲಿ, ಅವಿರೋಧಾತ್ = ವಿರೋಧವಿರುವುದಿಲ್ಲ. ಆದ್ದರಿಂದ ಪುರುಷೇ = ಪುರುಷಸೂಕ್ತಪ್ರತಿಪಾದ್ಯನಾದ ವಿಷ್ಣುವೇ ಗಾಯತ್ರೀಶಬ್ದಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆಂದು ನಿರ್ಣಯವಾಯಿತು.

---

भाष्यदीपिका – सिद्धान्तयत् सूत्रांशं व्याचष्टे – नेति ॥ नात्र वस्तुद्वयमुच्यते इत्यर्थः । किंत्विति शेषः, एकं वस्तूच्यत इत्यनुषज्यते । उभयस्मिन्निति साध्यान्तर्गतम् । अपिशब्दो न केवलमेकत्र, किन्तूभयत्रापीति समुच्चये । तथा च किन्तूभयस्मिन्नप्युपदेशे एकमेव विष्णवाख्यं वस्तूच्यत इति योजना । विरोधात् कथमेतद् युज्यते इत्यत आह - त्रिसप्तलोकापेक्षयेति ॥ त्रिलोकविवक्षया सप्तलोकविवक्षया च 'अविरोधात्' उभयत्राप्येकवस्त्वभिधाने विरोधाभावादित्यर्थः ॥

अयं भावः – यदा भूर्भुवस्स्वरिति लोकत्रयविवक्षा, तदा लक्षयोजनोच्छ्रितान्तरिक्षाख्यभुव उपरितनस्य सर्वस्यापि द्युत्वात् श्वेतद्वीपानन्तासनवैकुण्ठानां चान्तरिक्षादुपरितनत्वात् तत्रत्यं नारायणवासुदेववैकुण्ठाख्यं त्रिपाच्छब्दोक्तं रूपत्रयं दिवि तिष्ठतीत्युच्यत इति न सप्तम्यन्तोपदेशविरोधः । न च –

**'पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।**
**अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपस्थितो हरिः ॥'**

इत्युक्तेरनन्तासनस्य नान्तरिक्षादुपरितनतेति शङ्क्यम् । तस्य पृथिवीस्थत्वेऽपि बहुलक्षयोजनोच्छ्रितत्वेनैकलक्षयोजनोच्छ्रितान्तरिक्षादुपरितनत्वोपपत्तेः । सर्वपृथिवीस्थोच्चत्वोक्त्या तु न पृथिवीस्थान्योच्चत्वयोगो व्यावर्त्यते । किन्तु पृथिवीस्थोच्चत्वायोगः । यदा तु भूर्भुवस्स्वर्महर्जनस्तपस्सत्यमिति सप्तलोकविवक्षा तदेन्द्रसदनस्य द्युत्वात् तदुच्चस्याप्युपरिस्थितत्वेन तत्सजातीयस्य वैकुण्ठस्य दिवः परत्वम् ॥

**'पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।**
**दिवीन्द्रसदनं चैव तत्परे तु दिवः परे ॥'**

इति स्मृतेर्मेरोरपि द्युत्वात् तदुच्चस्य भूस्पृष्टत्वेन तत्सजातीयस्यानन्तासनस्यापि दिवः परता । एवं सूर्यमण्डलस्यापि द्युत्वात् तदुच्चस्योपरिस्थत्वेन तत्सजातीयस्य भूमेः

तत्वप्रकाशिका – सिद्धान्तयत्सूत्रांशं व्याचष्टे – नेति ॥ नात्र वस्तुद्वय-मुच्यते येनोभयोर्विष्णुत्वाभावः किन्तूभयत्राप्येकमेव । विवक्षाभेदेन सप्तमी-पञ्चम्योरेकार्थत्वेन विरोधाभावात् । तथा हि । भूर्भुवःसुव(स्व)रिति लोक-त्रयाभिप्रायेण लक्षयोजनोच्छ्रितान्तरिक्षोपरितनश्वेतद्वीपानन्तासनवैकुण्ठानां द्युत्त्वात् तद्गतरुपत्रयं दिवीत्युच्यते ।

सप्तलोकापेक्षया इन्द्रसदनस्य द्युत्वाद्वैकुण्ठस्य दिवःपरत्वम् । मेरोरपि द्युत्वात्तत्परानन्तासनस्य दिवःपरत्वम् । सूर्यमण्डलस्यापि द्युत्वेन तदुत्तरश्वेतद्वीपस्य दिवःपरत्वम् । तत्रस्थमूर्तित्रयस्य दिवःपरत्वं च युज्यते । अत उभयथोपदेशोऽपि विरोधाभावादुभयत्राप्येकमेव विष्ण्वाख्यं वस्तूच्यत इति भावः ।

एवं पृथिव्यन्तरिक्षस्वरात्मकसर्वलोकेभ्यः क्रमेणानन्तासनादीनामुच्चत्वेन सर्वतः पृष्ठत्वं तथा मेरुवैजयन्तसत्यलोकेभ्यो ब्रह्मसदनेभ्यस्तेषां क्रमेणोच्चत्वात् विश्वतः पृष्ठत्वं च ज्ञातव्यम् । तस्माद् गायत्री विष्णुरेव स एव ज्योतिरानन्द-मयश्चेति सिद्धम् ॥ २७ ॥ ॥ इति तत्वप्रकाशिकायां गायत्र्यधिकरणम् ॥

---

किञ्चिदन्तरितस्य स्वर्गसमोन्नतस्य श्वेतद्वीपस्यापि दिवः परत्वमस्तीति न पञ्चम्यन्तोपदेशविरोधोऽपीति । द्युपरत्वं च सम्भावितसजातीयद्युपरत्वमिति न यावत्त्वयत्किञ्चित्त्वमुखेन दूषणावकाशः । वैकुण्ठस्य स्वर्गलोकात् परत्वेनैव दिवः परत्वसिद्धावपि तस्य 'सर्वतः पृष्ठेषु' इत्यनेनैव उक्तत्वात् स्वर्गत्यागेनेन्द्रसदनस्य द्युत्वोक्तिः । न च लोकत्रयविवक्षयैवानन्तासनादीनामपि मेर्वादिपरत्वेन दिवः परत्वस्यापि सिद्धेः सप्तलोकविवक्षा व्यर्थेति वाच्यम् । तथा सति वैकुण्ठस्यापि द्युशब्दार्थनिविष्टत्वेन तस्य सर्वद्युपरत्वासिद्ध्यापत्त्या 'द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते' इति प्रमाणविरोधापातात् ॥

छान्दोग्यभाष्ये तु –

'अनन्तशयनं चैव तथाऽनन्तासनं हरेः ।
बहुलक्षोच्छ्रिते नित्ये विमाने संस्थितं यतः ।
चित्प्रकृत्यात्मनि यतो दिवीति कथितं श्रुतौ ॥'

इति प्रमाणबलेन चित्प्रकृत्यात्मकानन्तासनश्वेतद्वीपवैकुण्ठाख्यस्थानत्रये सप्तम्यन्तो द्युशब्दो द्योतमानत्वनिमित्तेन यौगिकः, स्वर्गादौ तु रूढ इति उपदेशयोरविरोध इति प्रकारान्तरेण विरोधपरिहारः कृतः ॥ ११ ॥

ಸಿದ್ಧಾಂತಮಾಡುವುದಕ್ಕಾಗಿ ಸೂತ್ರದಲ್ಲಿರುವ ಸಿದ್ಧಾಂತಭಾಗವನ್ನು ''ನ'' ಎಂಬ ವಾಕ್ಯಾಂಶದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ.

ಇಲ್ಲಿ ಎರಡು ವಸ್ತುಗಳು ಪ್ರತಿಪಾದ್ಯಗಳಾಗಿಲ್ಲ. ಹಾಗಾಗಿದ್ದಲ್ಲಿ ವಿಷ್ಣುವಾಚಕವಲ್ಲವೆಂದು ಹೇಳಬಹುದಿತ್ತು. ಹೊರತಾಗಿ ಎರಡೂ ಕಡೆ ಒಂದೇ ವಸ್ತುವು ಪ್ರತಿಪಾದ್ಯವಾಗಿದೆ. ಬೇರೆ ಬೇರೆ ವಿವಕ್ಷೆಗಳಿಂದ ಸಪ್ತಮೀ ಹಾಗೂ ಪಂಚಮೀ ವಿಭಕ್ತಿಗಳಿಗೆ ಒಂದೇ ಅರ್ಥವನ್ನು ಹೇಳಬಹುದಾದ್ದರಿಂದ ವಿರೋಧವಿರುವುದಿಲ್ಲ. ಅದು ಹೀಗೆ — 'ಭೂರ್ಲೋಕ ಭುವರ್ಲೋಕ ಸ್ವರ್ಲೋಕ' ಎಂಬುದಾಗಿ ಸಮಗ್ರಬ್ರಹ್ಮಾಂಡವನ್ನು ಮೂರುಲೋಕಗಳೆಂದು ವಿವಕ್ಷಿಸಬೇಕು. ಆವಾಗ ಲಕ್ಷಯೋಜನಕ್ಕಿಂತ ಎತ್ತರದಲ್ಲಿರುವ ಅಂತರಿಕ್ಷಲೋಕಕ್ಕಿಂತಲೂ ಮೇಲಿರುವ ಶ್ವೇತದ್ವೀಪ, ಅನಂತಾಸನ ಮತ್ತು ವೈಕುಂಠಲೋಕಗಳು ದ್ಯುಲೋಕಗಳೆನಿಸುತ್ತವೆ. ಅವುಗಳಲ್ಲಿರುವ ಭಗವಂತನ ನಾರಾಯಣ, ವಾಸುದೇವ, ವೈಕುಂಠವೆಂಬ ಮೂರು ರೂಪಗಳು 'ದಿವಿಸ್ಥಿತ' ಎನಿಸುತ್ತವೆ.

ಸಮುಗ್ರಬ್ರಹ್ಮಾಂಡವನ್ನು ಸಪ್ತಲೋಕಾತ್ಮಕವಾಗಿ ವಿವಕ್ಷಿಸಿದಾಗ, ಇಂದ್ರಸದನವೇ ದ್ಯುಲೋಕವಾಗುತ್ತದೆ. ವೈಕುಂಠವು 'ದಿವಃಪರ' ವಾಗುತ್ತದೆ. ಮೇರು ಪರ್ವತವೂ ಸಹ ದ್ಯುಲೋಕವಾದ್ದರಿಂದ ಅದರ ಮೇಲಿರುವ ಅನಂತಾಸನವು ದಿವಃಪರವೇ ಆಗುತ್ತದೆ ಮತ್ತು ಸೂರ್ಯಮಂಡಲವು ದ್ಯುಲೋಕವಾದ್ದರಿಂದ ಅದರ ಮೇಲಿರುವ ಶ್ವೇತದ್ವೀಪವು ದಿವಃಪರವೇ ಆಗುತ್ತದೆ. ಒಟ್ಟಾರೆ ಈ ಮೂರು ಸ್ಥಳಗಳಲ್ಲಿರುವ ಪರಮಾತ್ಮನ ರೂಪಗಳಿಗೆ ದಿವಃಪರತ್ವವು ಯುಕ್ತವಾಗುತ್ತದೆ. ಆದ್ದರಿಂದ ಶ್ರುತಿಯಲ್ಲಿ ಎರಡು ಬಗೆಯಲ್ಲಿ ಗಾಯತ್ರೀ ಮತ್ತು ಜ್ಯೋತಿಗಳನ್ನು ಉಪದೇಶಿಸಿದ್ದರೂ ವಿರೋಧವು ಬರುವುದಿಲ್ಲ. ಎರಡೂ ಕಡೆಯೂ ವಿಷ್ಣು ಎಂಬ ಒಂದೇ ವಸ್ತುವು ಪ್ರತಿಪಾದ್ಯವಾಗಿದೆ ಎಂದು ತಿಳಿಯಬೇಕು.

ಇದೇ ರೀತಿಯಾಗಿ ಸೂತ್ರದಲ್ಲಿ ಪೃಥಿವೀ, ಅಂತರಿಕ್ಷ, ಸ್ವರ್ಗ ಸ್ವರೂಪವಾದ ಎಲ್ಲ ಲೋಕಗಳಿಗಿಂತ ಕ್ರಮವಾಗಿ ಅನಂತಾಸನಾದಿಗಳಿಗೆ ಉಚ್ಚತ್ವವನ್ನು ಹೇಳಬೇಕು. ಆದ್ದರಿಂದ ಅನಂತಾಸನಾದಿಗಳು ಎಲ್ಲಕ್ಕಿಂತ ಎತ್ತರದಲ್ಲಿವೆ. ಅದರಂತೆ ಮೇರುಪರ್ವತ, ವೈಜಯಂತ, ಸತ್ಯಲೋಕ ಮೊದಲಾದ ಬ್ರಹ್ಮಸದನಗಳಿಗಿಂತ ಅನಂತಾಸನಾದಿಗಳಿಗೆ ಕ್ರಮವಾಗಿ ಉಚ್ಚತ್ವವನ್ನು ಹೇಳಬೇಕು. ಆದ್ದರಿಂದಲೇ ಅವುಗಳು ಎಲ್ಲಕ್ಕಿಂತ ಎತ್ತರದಲ್ಲಿವೆ ಎಂದು ತಿಳಿಯಬೇಕು. ಈ ಎಲ್ಲ ಕಾರಣಗಳಿಂದ ಗಾಯತ್ರೀಶಬ್ದದಿಂದ ವಿಷ್ಣುವೇ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆ. ಅವನೇ ಜ್ಯೋತಿಶಬ್ದದಿಂದಲೂ ಪ್ರತಿಪಾದ್ಯನಾಗಿದ್ದಾನೆ ಆನಂದಮಯನೂ ಸಹ ಆಗಿದ್ದಾನೆಂದು ನಿರ್ಣಯವಾಯಿತು.

॥ಇಲ್ಲಿಗೆ ತತ್ತ್ವಪ್ರಕಾಶಿಕೆಯ ಕನ್ನಡಾನುವಾದದಲ್ಲಿ ಗಾಯತ್ರ್ಯಧಿಕರಣವು ಮುಗಿಯಿತು ॥

* * * *

ಪರಿಪೂರ್ಣಚಂದ್ರಿಕಾ

**भावदीपः** – 'उभयस्मिन्' इत्येतद् 'उभयत्र' इत्युक्तम् । तद्व्यनक्ति – **सप्तमीति** ॥ सप्तम्यन्तपञ्चम्यन्तपदघटितवाक्ययोरित्यर्थः ।

**लोकत्रयविवक्षायां परतो लक्षयोजनात् ।**
**सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ।**
**दिवःपरश्च भगवान् सप्तलोकविवक्षया ॥**

इति छान्दोग्यभाष्यदिशा व्याचष्टे – **भूरिति** ॥ **द्युत्वादिति** ॥ ननु द्वितीयस्कन्धतात्पर्ये षष्ठाध्याये –

**अनन्तासनवैकुण्ठनारायणपुराणि तु ।**
**त्रीणि धामानि विष्णोर्वै त्रिलोकाद् बहिरेव हि ॥**

इति कथं बाह्यत्वोक्तिः । उच्यते । 'भुवः स्वर्गश्च कोट्यैव योजनानां प्रविस्तृतौ' इत्युक्तेः । ततो बहिर्देशस्थत्वेनेति । विस्तृतमेतत् चन्द्रिकाप्रकाशे । सप्तेति ॥ भूर्भुवःसुवर्महर्जनस्तपःसत्यमिति सप्तेत्यर्थः । द्युत्वादीति ॥

**पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।**
**दिवीन्द्रसदनं चैव तत्परे तु दिवः परः ॥**

इति तद्भाष्योक्तेरिति भावः । त्रिलोकविवक्षायां मेर्वादिपरत्वेन द्युपरत्वसिद्धावपि वैकुण्ठस्य सर्वद्युपरत्वसिद्धये सप्तलोकविवक्षोक्तिः । 'द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते' इति तद्भाष्योक्तिः । विशेषस्तु चन्द्रिकायाम् ।

सर्वतः पृष्ठविश्वतः पृष्ठपदयोरपौनरुक्त्याय तद्भाष्यानुरोधेनार्थभेदमाह – **एवमिति** ॥ **तस्मादिति** ॥ गानत्राणकर्तृत्वादिनिरवकाशभगवल्लिङ्गानां भावात् । गायत्रीपदयोगरूढ्योर्विष्णौ भावाच्चेत्यर्थः । अधिवेदगतोष्णिग्बृहत्यनुष्टुबाद्यशेषनामोपलक्षकगायत्रीशब्दवाच्य इति प्रतिज्ञार्थो ध्येयः । सूत्रे गायत्रीनाम्नः साक्षादनुपादानात् टीकायामेवमनुक्तिः । उक्तं च तत्वप्रदीपे – '**सर्वाधि-(*ज्योतिषाधि)वेदोपलक्षणार्थो गायत्रीशब्दः**' इति विष्णौ गायत्रीत्यादिस्त्रीलिङ्गं तु 'प्रकृतिश्च' इति वक्ष्यमाणन्यायेनोपपद्यत इति भावः ॥

**स एवेति ॥** 'तस्मात्' इत्यनुवर्तते । तस्य च गायत्रीज्योतिषोरेकार्थत्वेन द्युःस्थत्वदिवःपरत्वविरोधाभावादिति **सर्वसूत्रार्थोपसंहारः** । ज्योतिरिति ॥ अत्रत्यं पूर्वोक्तसूक्तस्थं चेत्यर्थः । सूक्तस्थस्य चक्षुराद्यगोचरत्वोक्तावपि इह दृष्टत्वश्रुतत्वोक्तिः सुधोक्तदिशा अधिष्ठानादिद्वारोपपन्नेति भावः । 'आनन्दमयश्च' इति फलोक्तिः(*) ।

यदत्राह कश्चिद्रामानुजीयः – छन्दःसूत्रे चेदिति शङ्काश्रवणान्नाधिकरणान्तरमुचितम्- इति । तन्न । 'भोक्त्रापत्तेरविभागश्च' इत्यादौ त्वयापि तथात्वोपगमात् ।

यदपि तथाशब्दस्य छन्दःसाधर्म्यमेवार्थः स्वरसो न गायत्रीशब्दार्थत्वरूपोऽर्थ इति, तदपि न त्वदर्थस्य चन्द्रिकायां निरासात् । **'तथा हि दर्शनम्'** इति सूत्रे शेषोक्तिपरत्वेन तथाशब्दस्वारस्यस्य टीकायां व्यक्तत्वाच्च । 'निगदात्'इति पाठोऽपपाठः । 'निगमात्' इत्येव सुपाठ इति प्रजल्पनं तवार्वाचीनस्य निर्बीजम् । 'चेतोर्पणाय निगद' इति विग्रहो न युक्तः । प्रकृतिविकारभावाभावादित्यप्यबद्धम् । **सिद्धे शब्दार्थसम्बन्धे लोकतोऽर्थप्रयुक्ते शास्त्रेण धर्मनियमः** इत्यत्र महाभाष्ये पस्पशाग्रन्थे **'धर्माय नियम'** इति विग्रहस्य दर्शितत्वात् ।

यदपि 'तथाहि दर्शनम्' इत्यस्य लिङ्गोक्तिपरत्वे लिङ्गादित्येव निर्देशः स्यादिति, तदपि न । **'बाहुल्यात् श्रुतिलिङ्गयोः'** इत्यनुभाष्यसुधादावुक्तदिशा **'अतो ज्यायांश्च पूरुषः' 'यद्वै तद् ब्रह्म' 'एतामेव ब्रह्मोपनिषदम्'** इत्यादिब्रह्मशब्दादिप्रदर्शकानेकवाक्योपादानाय गायत्रीपदप्रवृत्तिनिमित्तप्रदर्शनाय च 'तथा हि दर्शनम्' इति निर्देशात् । लिङ्गात् इत्यादिनिर्देशे च तदलाभात् ।

यदपि गायत्र्या विष्णुत्वे चतुष्पदा इत्ययुक्तम्, टावृचीत्युक्तत्वादिति, तदपि न । बहुश्रुतिलिङ्गादिबलेन विष्णुत्वे सिद्धे शब्दनिर्वाहस्य कथञ्चित् कार्यत्वात् ।

(*) तथाचायं सूत्रार्थः । गायत्री ज्योतिश्च द्युस्थत्वदिवःपरत्वरूपोपदेशभेदात् तद्ब्रह्म नेति चेन्न । उभयस्मिन्नप्युपदेशे विवक्षाभेदेनाविरोधादिति ।

अत्राद्ये उपक्रमवाक्योक्तत्वेन समन्वीयमानशब्दप्रवृत्तिनिमित्तत्वेन च प्राधान्याद् गानत्राणकर्तृत्वरूपस्वपक्षसाधकोक्तिः । द्वितीये संवादितयोदाहृतमन्त्रोक्तलिङ्गोक्तिः । तृतीये बाधकोद्धार इति सूत्रक्रमः ॥ – वाक्यार्थमुक्तावली ।

'पादोन्यतरस्याम्' इत्यत्र ङीबभावपक्षे हलन्तादवेति टापि सति पदादेशो चतुष्पदेत्युपपत्तेः । एवमन्यदपि तदीयं दुर्वचनं दूरीकार्यम् ॥२७॥अ.११॥

'ಉಭಯಸ್ಮಿನ್' ಎಂಬ ಪದದ ಅರ್ಥವನ್ನೇ ಉಭಯತ್ರ ಎಂದಿದ್ದಾರೆ. ಅದನ್ನೇ 'ಸಪ್ತಮೀ ಪಂಚಮ್ಯೋಃ' ಇತ್ಯಾದಿವಾಕ್ಯದಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ. ಅಂದರೆ ಸಪ್ತಮ್ಯಂತವಾದ ಮತ್ತು ಪಂಚಮ್ಯಂತವಾದ ಪದಗಳಿಂದ ಘಟಿತವಾದ ವಾಕ್ಯಗಳಿಗೆ ಎಂದರ್ಥ.

ಲೋಕತ್ರಯವಿವಕ್ಷಾಯಾಂ ಪರತೋ ಲಕ್ಷಯೋಜನಾತ್ ।
ಸರ್ವಂ ದ್ಯೌರಿತಿ ವಿಜ್ಞೇಯಂ ತತಸ್ತೇ ದಿವಿ ಸಂಸ್ಥಿತಾಃ ।
ದಿವಃ ಪರಶ್ಚ ಭಗವಾನ್ ಸಪ್ತಲೋಕವಿವಕ್ಷಯಾ ॥

'ತ್ರಿಲೋಕಗಳನ್ನಾಗಿ ವಿವಕ್ಷಿಸಿದಾಗ ಪೃಥಿವೀಲೋಕಕ್ಕಿಂತ ಲಕ್ಷಯೋಜನದ ಮೇಲೆ ದ್ಯುಲೋಕವಿದೆ. ಅಲ್ಲಿರುವ ರೂಪವು ದಿವಿಸ್ಥಿತವೆನಿಸುತ್ತದೆ. ಸಪ್ತಲೋಕವಿವಕ್ಷೆಯಿಂದ ಅಲ್ಲಿರುವ ರೂಪಗಳೇ ದಿವಃಪರ ಎನಿಸುತ್ತವೆ' ಹೀಗೆ ಛಾಂದೋಗ್ಯಭಾಷ್ಯದ ಪ್ರಕಾರ "ಭೂಃ" ಇತ್ಯಾದಿ ಟೀಕೆಯಿಂದ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ.

"ದ್ಯುತ್ವಾತ್" ಎಂಬ ಟೀಕೆಯ ಅಭಿಪ್ರಾಯ ಹೀಗಿದೆ. ದ್ವಿತೀಯಸ್ಕಂಧತಾತ್ಪರ್ಯದ ಆರನೆಯ ಅಧ್ಯಾಯದಲ್ಲಿ ಹೀಗೆ ಹೇಳಿದ್ದಾರೆ.

'ಅನಂತಾಸನವೈಕುಂಠನಾರಾಯಣಪುರಾಣಿ ತು ।
ತ್ರೀಣಿ ಧಾಮಾನಿ ವಿಷ್ಣೋರ್ವೈ ತ್ರಿಲೋಕಾದ್ ಬಹಿರೇವ ಹಿ ॥

'ಅನಂತಾಸನ ವೈಕುಂಠ ಮತ್ತು ಶ್ವೇತದ್ವೀಪಗಳು ಶ್ರೀಹರಿಯ ವಾಸಸ್ಥಾನಗಳೆನಿಸಿವೆ. ಇವುಗಳೆಲ್ಲವೂ ಮೂರು ಲೋಕಗಳಿಗಿಂತ ಹೊರಗಡೆ ಇರುವಂತಹವು.' ಹೀಗೆ ಹೇಳಿದ್ದರಿಂದ ಅನಂತಾಸನವು ದಿವಃಪರವೆಂದು ಹೇಗೆ ಹೇಳಿದಿರಿ ಎಂದು ಶಂಕಿಸಬಾರದು. ಏಕೆಂದರೆ "ಭುವಃ ಸ್ವರ್ಗಶ್ಚ ಕೋಟ್ಯೈವ ಯೋಜನಾನಾಂ ಪ್ರವಿಸ್ತೃತೌ' 'ಭುವಃಲೋಕ ಹಾಗೂ ಸ್ವರ್ಗಲೋಕಗಳು ಕೋಟಿಯೋಜನದಷ್ಟು ವಿಸ್ತೃತವಾಗಿವೆ'ಯೆಂದು ಹೇಳಿದ್ದರಿಂದ ಅದಕ್ಕಿಂತಲೂ ಹೊರಗಡೆ ಇರುತ್ತವೆಂದು ತಿಳಿಯಬೇಕು. ಹೆಚ್ಚಿನ ವಿಚಾರವನ್ನು ಚಂದ್ರಿಕಾಪ್ರಕಾಶದಲ್ಲಿ ತಿಳಿಯಬೇಕು.

"ಸಪ್ತ" ಸಪ್ತಲೋಕಗಳೆಂದರೆ ಭೂರ್ಲೋಕ, ಭುವರ್ಲೋಕ, ಸ್ವರ್ಲೋಕ, ಮಹರ್ಲೋಕ, ಜನೋಲೋಕ, ತಪೋಲೋಕ ಸತ್ಯಲೋಕ ಎಂದರ್ಥ. ಟೀಕೆಯಲ್ಲಿ "ದ್ಯುತ್ವಾತ್" ಎಂದಿದೆ. ಇದರ ಅರ್ಥ ಹೀಗಿದೆ —

ಪೃಥಿವ್ಯಾಂ ದ್ಯೌರ್ಮಹಾಮೇರುರಾಕಾಶೇ ಸೂರ್ಯಮಂಡಲಮ್ ।
ದಿವೀಂದ್ರಸದನಂ ಚೈವ ತತ್ಪರೇ ತು ದಿವಃ ಪರಃ ॥

ಮೇರುಪರ್ವತವು ಪೃಥಿವೀಲೋಕದ ದ್ಯುಲೋಕವೆನಿಸಿದೆ. ಅದರ ಮೇಲ್ಭಾಗದಲ್ಲಿ ಅನಂತಾಸನವಿದೆ. ಅನಂತಾಸನದಲ್ಲಿರುವ ಜ್ಯೋತಿಯು ದಿವಃಪರವೆನಿಸುತ್ತದೆ. ಅಂತರಿಕ್ಷಲೋಕದಲ್ಲಿ ಸೂರ್ಯಮಂಡಲವು

ದ್ಯುಲೋಕ. ಅದರ ಮೇಲೆಶ್ವೇತದ್ವೀಪವಿದೆ. ಶ್ವೇತದ್ವೀಪದಲ್ಲಿರುವ ರೂಪವೂ ಸಹ ದಿವಃಪರವೆನಿಸುತ್ತದೆ. ಸ್ವರ್ಗಲೋಕದಲ್ಲಿರುವ ಇಂದ್ರನ ಅರಮನೆಯು ದ್ಯುಲೋಕ. ಅದರ ಮೇಲೆ ವೈಕುಂಠವಿದೆ. ಅಲ್ಲಿರುವ ರೂಪವೂ ಸಹ ದಿವಃಪರವೆನಿಸುತ್ತದೆ. ಹೀಗೆ ಮೂರೂ ರೂಪಗಳಿಗೆ ದಿವಃಪರತ್ವವನ್ನು ತಿಳಿಯಬೇಕು. ತ್ರಿಲೋಕಗಳೆಂದು ವಿವಕ್ಷಿಸಿದಾಗ ಮೇರು ಪರ್ವತದ ಮೇಲ್ಭಾಗದಲ್ಲಿದ್ದಾಗಲೂ ದ್ಯುಪರತ್ವವು ಸಿದ್ಧವಾಗುತ್ತದೆ. ಆದರೂ ಸಹ ವೈಕುಂಠಕ್ಕೆ ಸಕಲ ದ್ಯುಲೋಕಗಳಿಗಿಂತ ಪರತ್ವವು ಸಿದ್ಧವಾಗುವುದಕ್ಕಾಗಿ ಸಪ್ತಲೋಕಗಳನ್ನು ವಿವಕ್ಷಿಸಿದ್ದಾರೆ. 'ದ್ಯುತ್ರಿಕೇಭ್ಯಶ್ಚ ಸರ್ವೇಭ್ಯೋ ವೈಕುಂಠಶ್ಚೋಚ್ಚ ಉಚ್ಯತೇ' ಎಂಬ ಭಾಷ್ಯದ ಮಾತೇ ಇದಕ್ಕೆ ಆಧಾರ. ವಿಶೇಷವಿಚಾರವನ್ನು ಚಂದ್ರಿಕೆಯಲ್ಲಿ ತಿಳಿಯಬೇಕು.

'ಸರ್ವತಃ ಪೃಷ್ಠ, ವಿಶ್ವತಃ ಪೃಷ್ಠ' ಪದಗಳಿಗೆ ಪುನರುಕ್ತಿಯನ್ನು ತಿಳಿಯಬಾರದೆನ್ನಲು ಉಪನಿಷದ್ಭಾಷ್ಯಕ್ಕೆ ಅನುಸಾರಿಯಾದ ಅರ್ಥವನ್ನು ''ಏವಮ್'' ಇತ್ಯಾದಿವಾಕ್ಯದಿಂದ ನಿರೂಪಿಸುತ್ತಿದ್ದಾರೆ. ತಸ್ಮಾತ್ ಎಂದರೆ 'ಗಾನತ್ರಾಣಕರ್ತೃತ್ವಾದಿರೂಪವಾದ ನಿರವಕಾಶ ಭಗವಲ್ಲಿಂಗಗಳಿರುವುದರಿಂದ' ಎಂದರ್ಥ. ಇದರ ಜೊತೆಗೆ ಗಾಯತ್ರೀಪದದ ಯೋಗ ಹಾಗೂ ರೂಢಿಗಳು ವಿಷ್ಣುವಿನಲ್ಲಿ ಇರುವುದರಿಂದಲೂ ಎಂದು ತಿಳಿಯಬೇಕು.

ಅಧಿವೇದಗತವಾದ ಎಲ್ಲಾ ಶಬ್ದಗಳನ್ನು ಈ ಅಧಿಕರಣದಲ್ಲಿ ಸಮನ್ವಯ ಮಾಡಲಾಗಿದೆ. ಗಾಯತ್ರೀಶಬ್ದವು ಇದಕ್ಕೆ ಕೇವಲ ಉಪಲಕ್ಷಕ. ಆದ್ದರಿಂದ 'ಉಷ್ಣಿಕ್, ಬೃಹತೀ, ಅನುಷ್ಟುಪ್, ಮೊದಲಾದ ಶಬ್ದವಾಚ್ಯತ್ವವನ್ನು ತಿಳಿಯಬೇಕು. ಸೂತ್ರದಲ್ಲಿ ಗಾಯತ್ರೀಪದವನ್ನು ನೇರವಾಗಿ ಉಲ್ಲೇಖಿಸಿಲ್ಲ. ಆದ್ದರಿಂದಲೇ ಟೀಕೆಯಲ್ಲಿಯೂ ಸಹ ಇದನ್ನು ಅನುಸರಿಸಿ ಉಲ್ಲೇಖಿಸಿಲ್ಲ. ಇದನ್ನೇ ತತ್ತ್ವಪ್ರದೀಪದಲ್ಲಿ 'ಸರ್ವಾಧಿವೇದೋಪಲಕ್ಷಣಾರ್ಥೋ ಗಾಯತ್ರೀಶಬ್ದಃ' 'ಅಧಿವೇದಗತವಾದ ಸಕಲಶಬ್ದಗಳಿಗೆ ಉಪಲಕ್ಷಕವಾಗಿ ಗಾಯತ್ರೀಶಬ್ದವು ಹೇಳಲ್ಪಟ್ಟಿದೆ' ಎಂದು ಹೇಳಿದ್ದಾರೆ.

ಸ್ತ್ರೀಲಿಂಗವಾದ ಗಾಯತ್ರೀಪದದ ಸಮನ್ವಯವನ್ನು ವಿಷ್ಣುವಿನಲ್ಲಿ ಹೇಗೆ ತಾನೆ ಮಾಡುತ್ತೀರಿ? ಎಂಬ ಪ್ರಶ್ನೆಗೆ ''ಪ್ರಕೃತಿಶ್ಚ'' ಎಂಬ ಮುಂದೆ ಹೇಳಲಿರುವ ಸೂತ್ರದ ನ್ಯಾಯದಂತೆ ಉತ್ತರವನ್ನು ತಿಳಿಯಬೇಕು. 'ಸ ಏವ' ಎಂಬ ಟೀಕಾಮಾತಿನ ನಂತರ ತಸ್ಮಾತ್ ಎಂಬ ಪದವನ್ನು ಅನುವೃತ್ತಿಮಾಡಬೇಕು. ಗಾಯತ್ರೀಹಾಗೂ ಜ್ಯೋತಿಃಶಬ್ದಗಳು ಏಕಾರ್ಥವಾದ್ದರಿಂದ ದ್ಯುಸ್ಥತ್ವಕ್ಕೆ ಹಾಗೂ ದಿವಃಪರತ್ವಕ್ಕೆ ಪರಸ್ಪರವಿರೋಧ ಬರುವುದಿಲ್ಲವೆಂದು ತಿಳಿದು ಸಕಲಸೂತ್ರಗಳ ಅರ್ಥವನ್ನು ''ಜ್ಯೋತಿಃ'' ಎಂಬುದಾಗಿ ಉಪಸಂಹಾರ ಮಾಡುತ್ತಿದ್ದಾರೆ. ಈ ವಿಷಯವಾಕ್ಯದಲ್ಲಿ ಹಾಗೂ ಹಿಂದಿನ ಅಧಿಕರಣದ ವಿಷಯವಾಕ್ಯದಲ್ಲಿಯೂ ಹೇಳಲ್ಪಟ್ಟ ಜ್ಯೋತಿಯು ಎಂದರ್ಥ. ಸೂಕ್ತದಲ್ಲಿ ಪ್ರತಿಪಾದ್ಯನಾದವನಿಗೆ ಚಕ್ಷುರಾದ್ಯಗೋಚರತ್ವವನ್ನು ಹೇಳಲಾಗಿದೆ. ಆದರೆ ಪ್ರಕೃತ ವಿಷಯವಾಕ್ಯದಲ್ಲಿ ದೃಷ್ಟತ್ವ ಶ್ರುತತ್ವಗಳು ಅವನಲ್ಲಿ ಕೇಳಿಸುತ್ತಿವೆ. ಇವುಗಳ ವಿರೋಧವನ್ನು ಸುಧೆಯಲ್ಲಿ ಹೇಳಿದ ಪ್ರಕಾರ 'ಅಧಿಷ್ಠಾನದ್ವಾರಾ' ಪರಿಹರಿಸಬೇಕು. 'ಆನಂದಮಯಶ್ಚ' ಎಂದು ಹೇಳಿದ್ದು ಅಧಿಕರಣದ ಫಲರೂಪವಾಗಿದೆ.

ಈ ಅಧಿಕರಣದ ವಿಷಯದಲ್ಲಿ ರಾಮಾನುಜರಲ್ಲೊಬ್ಬನು ಹೀಗೆನ್ನುತ್ತಾನೆ. ''ಛಂದಃ ಸೂತ್ರದಲ್ಲಿ 'ಚೇತ್' ಎಂಬುದಾಗಿ ಶಂಕೆಯು ಕೇಳಿಸುತ್ತಿರುವುದರಿಂದ ಮತ್ತೊಂದು ಅಧಿಕರಣವೆಂದು ಹೇಳುವುದು

ಉಚಿತವಲ್ಲ' ಎಂದು. ಇದು ತಪ್ಪು. 'ಭೋಕ್ತ್ರಾಪತ್ತೇರವಿಭಾಗಶ್ಚೇತ್ ಸ್ಯಾಲ್ಲೋಕವತ್' ಇತ್ಯಾದಿ ಸೂತ್ರದಲ್ಲಿ ನೀವೇ ಈ ನ್ಯಾಯವನ್ನು ಒಪ್ಪಿಲ್ಲ. ಇನ್ನು ''ತಥಾ ಶಬ್ದಕ್ಕೆ ಸದೃಶವಾದ ಛಂದಸ್ಸು ಎಂಬರ್ಥವೇ ಸ್ವರಸ, ಹೊರತು ಗಾಯತ್ರೀಶಬ್ದಾರ್ಥತ್ವ ಎಂಬರ್ಥವು ಸ್ವರಸವಲ್ಲ'' ಎಂದು ಹೇಳಿದ್ದರ ನಿರಾಕರಣೆಯನ್ನು ಚಂದ್ರಿಕೆಯಲ್ಲಿ ಮಾಡಿದ್ದಾರೆ. 'ತಥಾ ಹಿ ದರ್ಶನಮ್' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಶೇಷೋಕ್ತಿಯ ಮೂಲಕ ತಥಾಶಬ್ದಕ್ಕೆ ಸ್ವರಸವಾದ ಅರ್ಥವನ್ನು ಟೀಕೆಯಲ್ಲಿ ಸ್ಪಷ್ಟಪಡಿಸಲಾಗಿದೆ. ಅಷ್ಟೇ ಅಲ್ಲದೆ ರಾಮಾನುಜರು 'ನಿಗಮಾತ್' ಎಂಬ ಪಾಠವನ್ನು ಸಾಧುವೆಂದು ಒಪ್ಪಿ ನಿಗದಾದ್ ಎಂಬ ಪಾಠವನ್ನು ಅಪಪಾಠವೆನ್ನುತ್ತಾರೆ. ಇದೂ ಸಹ ಹುರುಳಿಲ್ಲದ ಮಾತು.

'ಚೇತೋರ್ಪಣಾಯ ನಿಗದಃ' ಎಂಬ ವಿಗ್ರಹವೂ ಸಹ ಅಯುಕ್ತವಾಗಿದೆ. ಪ್ರಕೃತಿವಿಕಾರಭಾವ ಇದ್ದಲ್ಲಿ ಮಾತ್ರ ಈ ರೀತಿಯಾದ ವಿಗ್ರಹವನ್ನು ಮಾಡಬಹುದು. ಆದರೆ ಅಂತಹ ಪ್ರಕೃತಿವಿಕಾರಭಾವವನ್ನು ಇಲ್ಲಿ ಹೇಳಲಾಗದು'' ಎಂಬ ಅವರ ವಾದವೂ ಸಹ ತಪ್ಪು. ಏಕೆಂದರೆ ಶಬ್ದಾರ್ಥಸಂಬಂಧವು ಸಿದ್ಧವಾದ ಮೇಲೆ ಲೋಕದಲ್ಲಿ ಅಂತಹ ಅರ್ಥದಲ್ಲಿ ಶಬ್ದವನ್ನು ಪ್ರಯೋಗಿಸಿದ ಮೇಲೆ ಹೀಗೆ ವಿಗ್ರಹ ಹೇಳುವುದು ತಪ್ಪಲ್ಲ. ಏಕೆಂದರೆ 'ಶಾಸ್ತ್ರೇಣ ಧರ್ಮನಿಯಮಃ' ಎಂಬಲ್ಲಿ ಮಹಾಭಾಷ್ಯದ ಪಸ್ಪಶಗ್ರಂಥವು ಧರ್ಮಾಯ ನಿಯಮಃ ಎಂಬ ವಿಗ್ರಹವನ್ನು ಅಂಗೀಕರಿಸಿದೆ.

ಇನ್ನು 'ತಥಾಹಿ ದರ್ಶನಮ್' ಎಂಬುದಕ್ಕೆ ಲಿಂಗಾರ್ಥಕವೆಂದು ವ್ಯಾಖ್ಯಾನಿಸುವುದಾದರೆ 'ಲಿಂಗಾತ್' ಎಂದೇ ಹೇಳಬೇಕು ಎಂಬ ವಾದವೂ ಸಹ ತಪ್ಪು. ಏಕೆಂದರೆ 'ಬಾಹುಲ್ಯಾತ್ ಶ್ರುತಿಲಿಂಗಯೋಃ' ಎಂಬ ಅನುವ್ಯಾಖ್ಯಾನದ ಹಾಗೂ ಸುಧೆಯ ಪ್ರಕಾರ ಹಿಂದೆ ಹೇಳಿದಂತೆ 'ಅತೋ ಜ್ಯಾಯಾಂಶ್ಚ ಪುರುಷಃ' 'ಯದ್ ವೈ ತದ್ ಬ್ರಹ್ಮ' 'ಏತಾಮೇವ ಬ್ರಹ್ಮೋಪನಿಷದಮ್' ಇತ್ಯಾದಿಯಾಗಿ ಬ್ರಹ್ಮಶಬ್ದಾದಿ-ಪ್ರದರ್ಶಕವಾದ ಅನೇಕ ವಾಕ್ಯಗಳನ್ನು ವಿಷಯವಾಕ್ಯವನ್ನಾಗಿ ತಿಳಿಸಬೇಕಾಗಿದೆ. ಮತ್ತು ಗಾಯತ್ರೀಪದದ ಪ್ರವೃತ್ತಿನಿಮಿತ್ತವನ್ನೂ ಸಹ ತೋರಿಸಬೇಕಾಗಿದೆ. ಅದಕ್ಕೋಸ್ಕರ 'ತಥಾಹಿ ದರ್ಶನಮ್' ಎಂದು ನಿರ್ದೇಶಿಸಿದ್ದಾರೆ. 'ಲಿಂಗಾತ್' ಎಂದಷ್ಟೇ ಸೂತ್ರದಲ್ಲಿ ನಿರ್ದೇಶಿಸಿದರೆ ಈ ವಿಚಾರವು ತಿಳಿಯವುದಿಲ್ಲ.

ಇದರಂತೆ ''ಗಾಯತ್ರಿಯು ವಿಷ್ಣುವಾದಲ್ಲಿ ಚತುಷ್ಪದಾ ಎಂಬ ಪ್ರಯೋಗವು ತಪ್ಪಾಗುತ್ತದೆ. ಏಕೆಂದರೆ ಟಾಬೃಚಿ ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಛಂದೋ ವಾಚಕವಾದ ಶಬ್ದವಾದರೆ ಮಾತ್ರ ಟಾಪ್ ಪ್ರತ್ಯಯವನ್ನು ಹೇಳಿದ್ದಾರೆ.'' ಎಂಬೀ ವಾದವೂ ಸಹ ತಪ್ಪು. ಏಕೆಂದರೆ ಅನೇಕ ಶ್ರುತಿ ಹಾಗೂ ಲಿಂಗಗಳ ಬಲದಿಂದ ಗಾಯತ್ರೀಪದದಿಂದ ವಿಷ್ಣುವೇ ಪ್ರತಿಪಾದ್ಯನೆಂದು ನಿರ್ಣಯವಾದ ಮೇಲೆ ಚತುಷ್ಪದಾ ಎಂಬ ಶಬ್ದವನ್ನು ಹೇಗಾದರೂ ನಿರ್ವಹಿಸಬೇಕಾಗುತ್ತದೆ.

'ಪಾದೋನ್ಯತರಸ್ಯಾಮ್' ಎಂಬ ಸೂತ್ರದಲ್ಲಿ ಙೀಪ್ ಪ್ರತ್ಯಯ ಬಾರದ ಪಕ್ಷದಲ್ಲಿ 'ಹಲಂತಾದ್ ವಾ' ಎಂಬ ಸೂತ್ರದಿಂದ ಟಾಪ್ ಪ್ರತ್ಯವನ್ನು ಹೇಳಿದ್ದಾರೆ. ಅನಂತರ ಪದಾದೇಶ ಬಂದರೆ ಚತುಷ್ಪದಾ ಎಂಬ ರೂಪವು ನಿಷ್ಪನ್ನವಾಗುತ್ತದೆ. ಇಂತಹ ಇನ್ನೂ ಅನೇಕ ಅವರ ದುರ್ವಚನಗಳನ್ನು ದೂರೀಕರಿಸ-ಬೇಕು.

॥ಇಲ್ಲಿಗೆ ಭಾವದೀಪದಲ್ಲಿ ಗಾಯತ್ರ್ಯಧಿಕರಣದ ಕನ್ನಡಾನುವಾದವು ಮುಗಿಯಿತು ॥

. ಗಾಯತ್ರ್ಯಧಿಕರಣ (೧।೧।೧೧)

वाक्यार्थमञ्जरी – ॐ उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॐ ॥ गायत्रीज्योतिश्चद्युस्थत्वदिवः परत्वविरुद्धधर्मोपदेशात् तद्द्वयं ब्रह्माख्यैकवस्त्वनुपपन्नमिति चेन्न । विवक्षाभेदेनोभयथोपदेशोपपत्त्या विरोधाभावादित्यर्थः । प्रसङ्गयोः प्रकरणयोः ॥ **विरोधादिति** ॥ द्युस्थत्वदिवः परत्वयोरेकत्र विरोधादित्यर्थः । सप्तमी पञ्चम्योस्तद्धटितवाक्ययोः न ब्रह्माख्यैकं वस्तु इति लोकत्रयविवक्षायां परतो लक्षयोजनात् ।

**सर्वं द्यौरिति विज्ञेयं ततस्ते दिवि संस्थिताः ।**
**दिवः परश्च भगवान् सप्तलोकविवक्षया ॥**

इति प्रमाणानुसारेणाह – **भूरिति** ॥ अन्तरिक्षस्य द्युत्वलाभाय लक्षयोजनोच्छ्रितत्वोक्तिः ॥ **सप्तेति** ॥ भूः भुवः स्वः महः जनः तपः सत्यमिति सप्तेत्यर्थः ।

**पृथिव्यां द्यौर्महामेरुराकाशे सूर्यमण्डलम् ।**
**दिवीन्द्रसदनं चैव तत्परे तु दिवः परः ॥**

इति प्रमाणानुसारेणाह – **इन्द्रसदनस्येत्यादि** ॥ अत्र लोकविवक्षायामपि मेर्वादिपरत्वेन दिवः परत्वसिद्धावपि वैकुण्ठस्य दिवःपरत्वसिद्धये सप्तलोकविवक्षोक्तिः । विशेषस्तु चन्दिद्रकाभाव-बोधयोर्द्रष्टव्यः । पौनरुक्तिवारणाय सर्वतः पृष्ठविश्वतःपृष्ठशब्दौ व्याचष्टे – **एवमिति** ॥

**पृथिवीस्थेषु सर्वोच्चो लोकोऽनन्तासनात्मकः ।**
**अन्तरिक्षात्मकेभ्यश्च श्वेतद्वीपस्थितो हरिः ॥**
**द्व्यात्मकेभ्यश्च सर्वेभ्यो वैकुण्ठश्चोच्च उच्यते ॥**

इत्युक्तेरिति भावः ॥

**पृथिव्यां ब्रह्मणो मेरौ जयन्तं त्वन्तरिक्षगम् ।**
**तृतीयं सत्यलोकं च सदनं त्रिविधं स्मृतम् ॥**
**तेभ्योऽनन्तासनाद्या यत् परतो विश्वतः परः ॥**

इति प्रमाणानुसारेणाह – **तथेति** ॥

**॥ इति वाक्यार्थमञ्जर्यां गायत्र्यधिकरणम् ॥**

## सत्तर्कदीपावळिः

ॐ ॥ छन्दोभिधानात् नेति चेन्न तथा चेतोऽर्पणनिगदात् तथा हि दर्शनम् ॐ ॥२५॥

'अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेष्वनुत्तमेषु लोकेषु इदं वा व तद्यदिदमस्मिन्नन्तःपुरुषे ज्योतिः' इति श्रुत्यन्तरादपि विष्णुरेव मुख्यज्योतिः । इदमेवाक्षिप्य समर्थयत् सूत्रमुपन्यस्य व्याचष्टे – छन्दोभिधानादित्यादिना ॥

नच वाच्यं 'गायत्री वा इदं सर्वम्' इति गायत्रीछन्दःप्रारम्भात् नात्र ज्योतिःशब्दार्थो विष्णुरिति । 'गायति त्रायति च तस्माद् गायत्रीनाम' इति गायत्रीशब्दस्य विष्णुपरत्वश्रुतेः 'सर्वच्छन्दोभिधो ह्येषः' इति पुराणवचनाच्चेत्यर्थः । 'सैषा चतुष्पदा' इत्युक्त्वा, तदेतदृचाभ्युक्तम् । 'पादोऽस्य सर्वा भूतानि' इति श्रुतेश्च ॥

'ಅಥ ಯದತಃ ಪರೋ ದಿವೋ ಜ್ಯೋತಿರ್ದೀಪ್ಯತೇ ವಿಶ್ವತಃ ಪೃಷ್ಠೇಷ್ವನುತ್ತಮೇಷು ಲೋಕೇಷು ಇದಂ ವಾ ವ ತದ್ಯದಿದಮಸ್ಮಿನ್ ಅಂತಃಪುರುಷೇ ಜ್ಯೋತಿಃ' ಎಂಬ ಮತ್ತೊಂದು ಶ್ರುತಿಪ್ರಮಾಣದ ಬಲದಿಂದಲೂ ವಿಷ್ಣುವೇ ಜ್ಯೋತಿಃಶಬ್ದದಿಂದ ಮುಖ್ಯಪ್ರತಿಪಾದ್ಯನು. ಈ ವಿಷಯವನ್ನು ಆಕ್ಷೇಪಿಸಿ ಉತ್ತರಿಸುವುದಕ್ಕಾಗಿ ಸೂತ್ರವನ್ನು ಅನುವಾದ ಮಾಡಿ ವ್ಯಾಖ್ಯಾನಿಸುತ್ತಿದ್ದಾರೆ ''ಛಂದೋಭಿಧಾನಾತ್'' ಇತ್ಯಾದಿಯಾಗಿ.

'ಗಾಯತ್ರೀ ವಾ ಇದಂ ಸರ್ವಮ್' ಎಂಬುದಾಗಿ ಪ್ರಾರಂಭದಲ್ಲಿ ಗಾಯತ್ರೀಛಂದಸ್ಸಿನ ಪ್ರಸ್ತಾಪವಿದೆ. ಆದ್ದರಿಂದ 'ಅಥ ಯದತಃ' ಇತ್ಯಾದಿ ವಾಕ್ಯದಲ್ಲಿ ಪ್ರತಿಪಾದ್ಯವಾದ ಜ್ಯೋತಿಸ್ಸು ವಿಷ್ಣುವಲ್ಲ.

ಈ ಶಂಕೆಯು ಸರಿಯಲ್ಲ. ಏಕೆಂದರೆ 'ಗಾಯತಿ ಚ ತ್ರಾಯತಿ ಚ ತಸ್ಮಾದ್ ಗಾಯತ್ರೀ ನಾಮ' ಗಾನತ್ರಾಣಕರ್ತೃವಾದ್ದರಿಂದ ವಿಷ್ಣುವೇ ಗಾಯತ್ರೀ ಎನಿಸಿದ್ದಾನೆ ಎಂಬುದಾಗಿ ಗಾಯತ್ರೀಶಬ್ದವು ವಿಷ್ಣುಪರವೆಂದು ಶ್ರುತಿ ಹೇಳುತ್ತಿದೆ. ಮತ್ತು 'ಸರ್ವಚ್ಛಂದೋಭಿಧೋ ಹ್ಯೇಷಃ' ಎಂಬ ಪುರಾಣದ ಮಾತಿನಿಂದಲೂ ಸಹ ಗಾಯತ್ರೀಶಬ್ದಾರ್ಥನಾದವನು ವಿಷ್ಣುವೆಂದು ತಿಳಿಯುತ್ತದೆ. 'ಸೈಷಾ ಚತುಷ್ಪದಾ' ಎಂದು ಪ್ರಾರಂಭಿಸಿ 'ತದೇತದ್ ಋಚಾಭ್ಯುಕ್ತಂ' ಎಂಬುದಾಗಿ ಇವನ ನಾಲ್ಕುರೂಪಗಳು ಋಗ್ವೇದದಲ್ಲಿರುವ ಪುರುಷಸೂಕ್ತದಲ್ಲಿ ನಿರೂಪಿತವಾಗಿವೆ ಎಂದು ಹೇಳಲಾಗಿದೆ. 'ಪಾದೋಽಸ್ಯ ಸರ್ವಾ ಭೂತಾನಿ' ಎಂಬುದಾಗಿ ಸಕಲಭೂತಗಳಲ್ಲಿ ಅವನ ಒಂದು ರೂಪವನ್ನು ವರ್ಣಿಸಿದೆ. ಇದರಿಂದಲೂ ಗಾಯತ್ರಿಯು ವಿಷ್ಣುವೆಂದು ನಿರ್ಣಯವಾಗುತ್ತದೆ.

